सुलभे सत्यपि कन्दे मूले च ग्रामनिकटानां यवानां भक्षणे कार्यव्यतिरेकोऽवगम्यते। अकार्यमकृत्यमेव भवति, यतः कृषीवलानामाताडनादिशङ्काप्युदेति यवभक्षणाच्च न सेत्स्यतीति तात्पर्यम्। योग्य. पुत्रो लोकद्वयसाधको भवतीति धर्मः। ससहायोऽशक्तोऽपि गर्वायत इति नीतिः। दृष्टपुत्रादिसमृद्धेः सांसारिकस्य तत्त्वज्ञानं नोत्पद्यत इति युक्तिः। विग्रहराजस्य ॥ ४०७ ॥

एएण च्चिअ कंकेल्लि ! तुज्झ तं ण त्थि जं ण पज्जत्तं।
उवमिज्जइ जं तुह पल्लवेण वरकामिणीहत्थो ॥ ४०८ ॥

एतेनैव कङ्केले[1] तव नास्ति यन्न पर्याप्तम्।
उपमीयते यत्तव पल्लवेन वरकामिनीहस्तः ॥

काचिन्नायिकाऽशोकव्याजेन कमपि नायकं स्तुवन्ती अशोकमुद्दिश्य वदति—एएण च्चिअ इति। कङ्केल्लिरशोकः। एतेनैव पल्लवेन तत्प्रमेयं नास्ति यत्तव न पर्याप्तं परिपूर्णम्। एतदेवाह—यत्तव पल्लवेन वरकामिनीनां हस्त उपमीयत इतः परा तव काधिका कान्तेति भावः। सत्पुरुषेण तदेव कर्माचरणीयं येन सतां सादृश्यविषयो भवतीति धर्मः। येन केनापि गुणेन लोके प्रकर्षो जायते स एवादर्तव्य.। ननु तत्र खेदः कर्तव्य इति नीतिः। एकेनैव तत्त्वज्ञानेन सर्वं परिपूर्णं किमपरेणेति युक्तिः। कल्लिलस्य ॥ ४०८ ॥

रसिअ ! विअड्ढ ! विलासिअ ! समअण्णुअ ! सच्चअं असोओ सि।
वरजुवइचलणकमलाहओ वि जं विअससि सअह्नं ॥४०९॥

रसिक ! विदग्ध ! विलासिन्समयज्ञ ! सत्यमशोकोऽसि।
वरयुवतिचरणकमलाहतोऽपि यद्विकससि सतृष्णम् ॥

नायिकायाः प्रणयरोषवचसा कुपितस्य नायकस्य मनोवृत्तये निपुणा सखी सानुरागमशोकं वर्णयति-रसिअ इति। सतृष्णं साकाङ्क्षं यथा स्यादेवं वरयुवतिचरणकमलाहतोपि यद्विकससि। अशोकस्य पुष्पोद्गम एव काङ्क्षा। अपिर्विरोधे। यस्त्वाहतोऽपमानितो भवति स च विकस्वरः सहर्षो न भवतीति। पूर्वगाथाया अवसानमत्र। कश्चिन्मानी पुरुषः प्रियया कृतकलहः पश्चात्तापगृहीतोऽशोकं स्तौति वा। समयज्ञ ! विदग्धाचारवेदिन् ! सत्यमशोकस्त्वं वयं मानगृहीता अविदग्धा एवेति तात्पर्यम्। समयज्ञतादयो गुणा लोकद्वयसाधका इति धर्मः। कालवशेन परचरणोपासनेनापि स्वसमृद्धिश्चिन्तनीयेति नीतिः। योगिनः सति तत्त्वज्ञानेऽधिकं सहर्षा भवन्तीति युक्तिः। 'तृष्णा स्यात्सर्वलिप्सयोः'। मेदिनी[2]। ब्रह्मचारिणः ॥ ४०९ ॥

---

१. अशोक for कङ्केले P. | २. Cf. Amara 1. 7. 28.

विज्झाविज्जइ जलणो गहवइधूआइ वित्थअसिहो वि ।
अणुमरणघणालिंगणपिअअमसुहसिज्जिरंगीए ॥ ४१० ॥

निर्वाप्यते[1] ज्वलनो गृहपतिदुहित्रा[2] विस्तृत[3]शिखोऽपि ।
अनुमरणघनालिङ्ग[4]नप्रियतमसुखस्वेदशीलाङ्गया ॥

कस्याश्चिद् गृहपतिसुताया अनुमरणं कुर्वन्त्यास्तस्यामपि दशायां प्रियालिङ्गनेन स्विन्नाङ्गया अनुरागातिशयमेकाऽपरस्याः कथयति—विज्झाविज्जइ इति । विध्माप्यते निर्वाप्यते । स्वेदस्य इयत्युत्कर्षो येन तादृशोऽग्निर्निर्वापित इति । अनुमरणरसिकानां स्त्रीणां धर्मपरतया मरणमपि सुखायेति धर्मः । अनुरागोपदर्शनं सर्वत्र कर्तव्यमिति नीतिः । मनस्यारोपितपरमानन्दसुखा बाह्यक्लेशं न गणयन्तीति युक्तिः ॥ ४१० ॥

जारमसाणसमुब्भवभूइसुहप्फंससिज्जिरंगीए ।
ण समप्पइ णवकावालिणीअ उद्धूलणारंभो ॥४११॥

जारश्मशानसमुद्भवभूतिसुखस्पर्शस्वेदशीलाङ्गयाः[5] ।
न समाप्यते नव[6]कापालिन्या उद्धूलनारम्भः[7] ॥

अन्यापदेशेन कामुकान्तरेणापि नायिकायाः स्थिरस्नेहत्वं प्रतिपादयन्ती दूतीदमाह—जारेति । भूतिर्भस्मनि । भूतेः सुखस्पर्शेन स्वेदशीलान्यङ्गानि यस्याः । प्रथमा नवा कापालिनी कपालव्रतधारिणी । उद्धूलनसमालम्भनमनुलेपनम् । अनुमरणादि कपालव्रतं स्त्रीणां श्रेय इति धर्मः । निह्नुतोऽपि भावोऽभिज्ञैरिङ्गितेन ज्ञायत इति नीतिः । प्रथमं प्राणायामाभ्यासे स्वेदाद्युपद्रवो भवतीति तज्जये यत्नः कार्य इति युक्तिः । शालवाहनस्य ॥ ४११ ॥

एक्को पण्हुअइ थणो बीओ पुलएइ णहमुहालिहिओ ।
पुत्तस्स पिअअमस्स अ मज्झणिसण्णाइ घरणीअ ॥४१२॥

एकः प्रस्नौति स्तनो द्वितीयः पुलकितो भवति नखमुखालिखितः[8] ।
पुत्रस्य प्रियतमस्य च[9] मध्यनिषण्णाया गृहिण्याः ॥

---

१. विध्माप्यते for निर्वाप्यते P.

२. ०सुतया for ०दुहित्रा P.

३. आविच्छिन्न० for विस्तृत० P.

४. ० लिङ्गन० for ०लिङ्गित० P.

५. ०स्विद्यदङ्गया for ०स्वेदशीलाङ्गया P.

६. प्रथम० for नव० P.

७. उद्धूनना० for उद्धूलना० P.

८. For this line P. reads एकं प्रसूतौ स्तनं तृतीयं प्रलोकते नख-मुखाश्लिष्टम् ।

९. 'च' is missing in P.

नायिकाया आगमनासामर्थ्यमुपनायके सूचयन्ती दूतीदमाह—एक्कमिति । एकं स्तनं प्रस्नौति प्रस्नावयति पुत्रोऽर्थात् प्रियतमः नखमुखेनाश्लिष्टमङ्कितम् । एतदेव प्रियतमस्यावलोकने कारणम् । एक्को इति पाठे एकः पुत्रः, द्वितीयः प्रिय इति । सुभगपुत्रवती भवतीति नाल्पस्य पुण्यस्य फलमिति धर्मः । एकेनापि यथाशक्यं परार्तिहरणं कर्त्तव्यमिति नीतिः । संसारस्य नानारूपं दर्शयन् योगी शिष्यं वैराग्यमाहेति युक्तिः । तस्यैव ॥ ४१२ ॥

जं मुच्छिआइ ण सुओ कलंवगंधेण तं गुणे पडिअं ।
इअरा गज्जिअसद्दो जीएण विणा ण वोलंतो ॥४१३॥

यन्मूर्च्छितया न श्रुतः कदम्बगन्धेन तद् गुणे पतितम् ।
इतरथा गर्जितशब्दो जीवेन विना नातिकान्तः[1] ॥

दूती विरहिण्या अवस्थावर्णनं करोतीति—जं मुच्छिआइ इति । कदम्बस्य कदम्बकुसुमस्य गन्धेन मूर्च्छितया गर्जितरूपः शब्दो न श्रुतः, तेन तदश्रवणं गुणे पतितं वृत्तं, व्यतिक्रान्तो लङ्घितो न स्यादिति।'तं से गुणम्मि पडिअं कडंवगंधेन जं गआ मोहं' इति पाठान्तरम् । 'तत्रास्या गुणे पतितं कदम्बगन्धेन यद्गता मोहम्' इति विवरणम् । प्रसङ्गेनाप्यापतितं वारणीयं वारणीयमिति धर्मः । बुद्धिमताल्पेनैवायासेनापातसन्तरणीयं भवतीति नीतिः । सर्वेषु विषयेषु शब्द आकर्षकः स च रागजनको योगिना वारणीय इति युक्तिः । पालितस्य ॥ ४१३ ॥

एत्ताइ च्चिअ मोहं जणेइ वालत्तणे वि वट्टंती ।
गामणिधूआ विसलअव्व वड्ढीआ काहिइ अणत्थं ॥४१४॥

एतावत्यैव[2] मोहं जनयति बालत्वेऽपि वर्तमाना ।
ग्रामणीदुहिता[3] विषलतेव वर्द्धिता करिष्यत्यनर्थम् ॥

काप्यल्पवयस्कामेव नायकानुरञ्जनधर्मां दृष्ट्वा युवतीकाऽपरस्याः कथयति—एत्ताइ च्चिअ इति । एतावत्यैव वा । ग्रामणीसुता ग्रामप्रधानदुहिता । आपातसुकुमारं कर्म पापजनकं वर्द्धमानं कटु भवतीति तन्न विधेयमिति धर्मः । लोके नापि परिणामविरसं कर्तव्यमिति नीतिः । सर्वेभ्यो विषयेभ्यः परं व्यामोहिका स्त्री भवतीति तत्सम्पर्को वारणीय इति युक्ति. ॥४१४॥

---

१. व्यतिकान्तः for नातिकान्तः P.
२. इदानीमेव for एतावत्यैव P.
३. ०सुता for ०दुहिता P.

सुप्पउ तइओवि गओ जामो चि सहीउ ! कीस मं भणह ।
सेहालिआण गंधो ण देइ सोत्तुं सुहअ तुम्हे ॥ ४१५ ॥

सुप्यतां तृतीयोऽपि गतो याम इति सख्यः ! किमिति[1] मां भणथ ।
शेफालिकानां[2] गन्धो न ददाति स्वप्तुं[3] स्वपित[4] यूयम् ॥

दीर्घरात्रिजागराद् गाथा (रिथा) पाठ (टि) वमाशङ्कमानाभिः सखीभिर्विश्रामायोक्ता विरहिणी सनिर्वेदमिदमाह—सुप्पउ इति । शेफालिका सेहारिरिति ख्याता तस्या अपि पुष्पं शेफालिकानां मदनोद्दीपकत्वात् । अपि तु कथं समर्थास्मीति भावः । रात्रौ जागरणं दिवा च शयनं निषिद्धमिति धर्मः । प्रौढे कार्यविघाते सति उद्यतं कार्यं न सिध्यतीति नीतिः । प्रौढशीलो योगाधिकारी भवतीति युक्तिः । श्रीशक्तेः ॥४१५॥

कइ सो ण संभरिज्जइ जो मे तह संठिआइ अंगाइं ।
णिव्वत्तिए वि सुरए णिज्झाअइ सुरअरसिओ व्व ॥४१६॥

कथं स न संस्मर्यते यो मे तथा संस्थितान्यङ्गानि ।
निर्वर्तितेऽपि सुरते निध्यायति सुरतरसिक इव ॥

सानुरागा विरहिणी सखीमिदमाह—कइ सो इति । तथा संस्थितानि सुरतायासनिस्सहानि । निर्वर्तिते रागे गलिते सुरतरसिको यथा निर्ध्यायति तथेत्यर्थः । नच रक्तं विरागयेदित्याधाराद् अनुरक्ते वैराग्यं नाचरणीयमिति कामो धर्मश्च । उपचारातिशयेन वशीकृता बन्धुवचनमप्युल्लङ्घ्य तद्गतहृदया भवन्तीति नीतिः । संसारस्य एतादृश एव क्रमो यदुपभुजे (क्ते) पि विषयेऽधिकाकाङ्क्षा भवतीति युक्तिः । शङ्करस्य ॥४१६॥

सुक्खंतबहलकद्दमघम्मविसूरंतकमढपाढीणं ।
दिट्ठं अदिट्ठउव्वं कालेण तलं तडाअस्स ॥४१७॥

शुष्यद्बहलकर्दमघर्मखिद्यमानकमठपाठीनम् ।
दृष्टमदृष्टपूर्वं कालेन तलं तडागस्य ॥

---

१. इति is wanting in P.
२. शेफालिकायां for शेफालिकानां P.
३. स्वपितुं for स्वप्तुं P.
४. स्वप्त for स्वपित P.
५. सं is missing in P.
६. मे for मम P.
७. P. adds इति after अङ्गानि
८. अपि is missing in P.
९. निर् for नि P.

सद्दागनिकटकुञ्जदेशागमनसङ्केतनाहं तत्र गता 'त्वं तु न गत'[1] इति जनाकीर्णा एव सा च तस्य कथयति—चाअंतेति[2]। शुष्यता पङ्किलेन कर्दमेन घर्मेण वाऽऽतपेन च खिद्यमानाः कमठाः कच्छपाः पाठीना वाथोर इति ख्याता मत्स्या यत्र तत्तलम्। तादृश सद्दागस्य तलं कालेन अदृष्टपूर्वं पूर्वं न दृष्टमपि दृष्टम्। कालेन मृत्युना। तल स्वरूपम्। 'तलं स्वरूपाधोऽर्थयोः' अमरः[3]। विपद्गतेषु प्राणिषु नित्यं दया कर्तव्येति धर्मः। विभूत्या गर्वो न कर्तव्य इति नीतिः। सर्वमेतैतदनित्यमिति युक्तिः। शालवाहनस्य ॥४१७॥

चोरिअरअसद्धालुणि ! मा पुत्ति ! भम्मसु अंधआरम्मि ।

अहिअअरं लक्खिज्जसि तमभरिए दीवसीह व्व ॥ ४१८ ॥

चौर्यरतश्रद्धालुके[4]! मा[5] पुत्रि ! भ्रमान्धकारे[6]।

अधिकतरं लक्ष्यसे तमोभृते[7] दीपशिखेव[8] ॥

कापि गोत्रजरती कान्त्योज्ज्वलतां पर्यायन्ती सपरिहासं काममप्यन्धकाराभिसारिकामाह—चोरिअरअ इति। तमसा भृते व्याप्ते। यथा दीपस्य शिखाऽन्धकारेऽधिकं लक्ष्यते तथेत्यर्थः। धार्मिकेभ्योऽज्ज्वलगुणेन दुश्चेष्टा न कर्तव्येति धर्मः। अकार्योपदर्शनेनापि अनुजीविना स्वामी वारणीय इति नीतिः। संसारान्धतमसे तत्त्वज्ञानं प्रदीपवद् बोद्धव्यमिति युक्तिः। प्रद्युम्नदत्तस्य ॥४१८॥

वाहित्ता पडिवअणं ण देइ रूसेइ एक्कमेक्कस्स ।

असई कज्जेन विणा पइप्पमाणे णईकच्छे ॥ ४१९ ॥

'व्याहृता प्रतिवचनं न ददाति रुष्यत्येकैकस्य ।

असती कार्येण विना प्रदीप्यमाने नदीकच्छे ॥'[9]

काचित् कुलटा नदीसन्निहितनिकुञ्जदेशे दह्यमाने दोषं विनापि स्वामिने प्रत्युत्तरं न ददातीत्येकः परस्याः कथयति। स्थानान्तरान्वेषणाय कुट्टनी जारं श्रावयति—वाहित्ता इति। व्याहृता प्रतिवचनं न ददातीत्यन्वयः। प्रतिवचनमुत्तरम्। प्राणिनां वधान्महदिदमधर्महेतु यद्वनदहनमिति धर्मः। दुःखिते मनसि सर्वमसह्यमिति नीतिः।

---

१. P. reads त्वनुगत for त्वं तु न गत.

२. सुक्खंतेति is suggested.

३. III. 3. 2. "अधःस्वरूपयोरस्त्री तलं स्यात्"

४. चोरिकारतश्रद्धालो for चौर्यरतश्रद्धालुके P.

५. P. adds भ्रज after मा.

६. भ्रम is missing in P.

७. ०भृते for ०भृते P.

८. दीप० for दीपक० P.

९. The text is missing in P.

क्रोधादयश्च शत्रवः शरीरे हेया इति युक्तिः। प्रतीयमानेङ्गितलक्षणः सूक्ष्मभेदोऽयम्। तदुक्तं कण्ठाभरणे[1]—

इङ्गिताकारलक्ष्योऽर्थः सूक्ष्मः सूक्ष्मगुणात्तु यः[2]।
सूक्ष्मात्प्रत्यक्षतः[3] सूक्ष्मोऽप्रत्यक्ष इति भिद्यते ॥
वाच्यः प्रतीयमानश्च सूक्ष्मोऽत्र द्विविधो मतः।
इङ्गिताकारलक्ष्यत्वं लक्ष्यसामान्यमेतयोः ॥

अत्र इति वचनाप्रदानपरिजनकोपाभ्यां दीप्यमाने नदीकच्छे इत्यनेन प्रत्याय्यमानः संकेतकुहृदाहोद्भवो वधूजनमनस्तापो वाक्यार्थत्वेन लक्षित इत्ययमिङ्गितलक्ष्यः प्रतीयमानः सूक्ष्मभेद इति। रोलदेवस्य ॥ ४१९ ॥

आम असइ म्ह ओसर पइव्वए ! ण तुह मइलिअं गोत्तं।
किं उण जणस्स जाअव्व चंडिलं ता ण कामेमो ॥४२०॥

आम[4] असत्यः स्मः अपसर[5] पतिव्रते ! न ते[6]मलिनितं गोत्रम्।
किं पुनर्जनस्य[7] जायेव नापितं[8] तावन्न[9] कामयामहे ॥

प्रतिवेशिन्या उपालब्धा तद्दुःखशीलतां प्रकटयन्ती काप्यसतीदमाह। परस्परं कलहायमाने वा द्वे कुलटे वदतः—आमेति। 'आम सेर्ष्यानुमतौ' भट्टीकायाम्। असत्यः स्मो वयम्। पतिव्रते इति सोपालम्भं सम्बोधनम्। तव न मलिनितं गोत्रम्। मम दुश्चरितैरित्यर्थात्, किं पुनर्जनस्य जायेव स्वमित्यभिप्रायः। आम निश्चये वा। आं ज्ञाननिश्चयस्मृत्योरिति मेदिनी[10]। गोत्र नाम्नि कुले कोपः[11]। चन्दिलो नापिते देशी। मर्म च शत्रोरपि नोद्घाटनीयमिति धर्मः। सदाचारानुरोधाद्यो यथा प्रवर्तेत स तथा प्रवृत्तः स्यादिति नीतिः। कुलमलिनत्वादिनिरपेक्षास्तत्त्वज्ञानिनो भवन्तीति युक्तिः। पालितस्य ॥ ४२० ॥

णिद्दं लहंति कहिअं सुणंति खलिअक्खरं ण जंपंति।
जाहि ण दिट्ठो सि तुमं ताओ च्चिअ सुहअ ! सुहिआओ ॥४२१॥

---

१. P. 155 Verses 21-22.
२. SK. reads सः for यः
३. SK. reads सूक्ष्मः प्रत्य० for सूक्ष्मात्प्रत्य०
४. आम is missing in P.
५. विरम for अपसर P.
६. तव न for न ते P.
७. जनस्य is missing in P.
८. चन्दिलं for नापितं P.
९. ततो न for तावन्न P.
१०. P. 251. V. 50
११. Cf. Amara III. 3 181. 'गोत्रं तु नाम्नि च'। चात् शैलकुलयोः।

निद्रां लभन्ते कथितं शृण्वन्ति स्खलिताक्षरं न जल्पन्ति ।
याभिर्न दृष्टोऽसि त्वं ता एव सुभग ! सुखिताः ॥

अन्यासां सुखकथनद्वारेणाऽऽत्मनोऽनुरागातिशयं सूचयन्ती प्रियमाह—समग्रगुणोपेतं नायकमाप्नुवन्ती काचित्प्रसङ्गेन सति तद्दर्शने तमुद्दिश्य वदति—णिद्दमिति । भवद्दर्शनेन करणापाटवात्स्खलिताक्षरत्वम् । स्खलितमयथास्थानकरणाभ्यामुच्चारितम् । वयं तु त्वद्दर्शनात् सुखितहृदया न सुखिताः । तव दुर्लभत्वादिति भावः । कमनीयाकृतेर्दर्शनमात्रादेव निद्राच्छेदादयो विकारा जायन्त इति सूचनम् । यत्सुखेन कालो याति तच्च सत्कर्मफलमतो धर्ममाचरणीयमिति धर्मः । कार्यव्यापृतानां निद्रात्यागोऽतिसमुचित इति नीतिः । यैः परमात्मा न दृष्टस्त एव निद्रादिसुखयोगिनो भवन्तीति युक्तिः । देवदेवस्य ॥ ४२१ ॥

वालअ ! तुमाइ दिण्णं कण्णे काऊण वोरसंघाडिं ।
लज्जालुइणी वि वहू घरं गआ गामरच्छाए ॥४२२॥

बालक ! त्वया दत्तां[1] कर्णे कृत्वा बदरसंघाटीम्[2] ।
लज्जालुरपि[3] वधूर्गृहं गता ग्रामरथ्यया ॥

कापीश्वरसुता कस्मिन्नपि जातानुरागा गता तद्दत्तं बदरयुगं कर्णे विधाय रथ्यां गतेत्यनुरागातिशयं तस्यास्तस्मिन् प्रौढा सखी निवेदयति । कस्याश्चिदनुरागं प्रत्यक्षसम्प्रत्ययमुपनायकं दूती सखी वा प्रत्याह—वालअ इति । बालक ! अनुरागलिङ्गानभिज्ञ ! सङ्घातो युगलपरोऽर्थात् । अन्ना ईश्वरसुता । लज्जालुरपि वधूरिति वा । धारयेदपि तद्दत्तं कर्णे कृत्वा बदनसङ्घातं यत्किञ्चिदपीत्यनुरागलिङ्गं पालयन्ती स्वानुरागं सूचयन्ती दृश्ये स्थाने बदनधारणाल्लोकेभ्योऽपि न लज्जिता ग्रामरथ्यया गतेति भावः । कापि पतिव्रता दुर्गतस्य स्वामिनोऽल्पदानेनापि भावयन्ती प्रियप्रियमाचरितवतीति धर्मः । इङ्गितानभिज्ञस्य नीतिमन्तो निन्दां कुर्वन्तीति नीतिः । स्त्रीणां च स्वभावोऽयं यत् क्षुद्रचेष्टायामप्यनुरागं प्रकाशयन्तीति तासां सन्निधानं वर्जनीयमिति युक्तिः । कण्ठाभरणे[4] नायिकासु पाणिगृहीतासूढेयम् इति । तुङ्गकस्य ॥४२२॥

अह सो विलक्खहिअओ मए अहव्वाइ अगहिआणुणओ ।
परवज्जणच्चिरीहिँ तुम्हेहि उवेक्खिओ णिंतो ॥४२३॥

---

१. दत्तं for दत्तां P.
२. बदनसङ्घातं for बदरसंघाटीम् P.
३. ०रज्जा for ०रपि P.
४. The verse is not quoted in SK.

अथ स विलक्षहृदयो मयाऽमन्दयाऽगृहीतानुनयः।
परवाद्यनर्तनशीलाभिर्युष्माभिरुपेक्षितो निर्यन् ॥

काचिद् गृहीतमानाऽननुनीतानुनयं गृहीतवती ततः प्रिये विलक्षे गते स्वयमेव गलितमाना सखीभिरुपालभ्यते—अह सो इति। अमन्दया मन्दया। परवाद्येत्यादिनाऽनास्ताभिधानम्[2]। यतो नर्तनेऽपि स्ववाद्यासन्निधानमनपेक्षितम्। निर्यन् निर्गच्छन्। इण् शतृ। इणो यण्। नायिका चेयमसन्निहिता। तदुक्तम्—

निरस्तो मन्युना कान्तो नमन्नप्रियया पुरा।
दुःस्थिता तं विना[3] सातिसन्निहिता तथा ॥

इति। अथ प्रश्ने, मङ्गले प्रश्ने इत्यमरः[4]। अधर्महेतुः क्रियाऽनुरोधेनापि न कर्तव्येति धर्मः। कामादिवशादकार्ये प्रवर्तमानः स्वामी सन्ततो भृत्येषु दोषमावर्जयतीति स तत्र वैर्यादर्णीय इति नीतिः। स्त्रीणामकधीरतया निर्वेदो भवतीति युक्तिः। शालवाहनस्य ॥४२३॥

दीसंतो णअणसुहो णिव्वुदिजणणो करेहि वि छिवंतो।
अब्भत्थिओ ण लब्भइ चंदो व्व पिओ कलाणिलओ ॥४२४॥

दृश्यमानो नयनसुखो[5] निर्वृतिजननः कराभ्यामपि[6] स्पृशन्।
अभ्यर्थितो न लभ्यते चन्द्र इव प्रियः कलानिलयः ॥

सकलगुणाधारे नायके काचिज्जातानुरागा तत्सकाशं प्रहितदूत्या तदस्वीकारे कथिते दूत्या चोक्तं कीदृशि प्रेयसि जाताभिलाषा वर्तसे इति सती नायिका सचाटुप्रियं वर्णयन्ती प्राह—दीसंतो इति। न केवलं दृश्यमानो नयनसुखः करैरपि स्पृशन्। निर्वृतिः सुखं तज्जननः। कलानां चतुःषष्टीनां निलय आधारः। यथा चन्द्रो दृश्यमानो नयनानन्दः केवलं न करैः किरणैरस्पृशन् सुखजननः। अभ्रमाकाशं तरन्तः। कला तु षोडशो भागस्तदाधारस्तथेत्यर्थः। चिन्तेयं द्वितीया कामावस्था। श्लेषोपमेयम्। जन्मान्तरीयपुण्यं विना प्रार्थितमपि न लभ्यत इति धर्मः। यथाशक्यं लाघवकरी याच्ञा न कर्त-

---

१. अगणिता० for अगृहीता० P.
२. ०नास्या० is suggested for ०नास्ता०
३. Two syllables are too short in this Pāda.
४. Cf. मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ Amara III. 3. 247.
५. ०सुखनिर्वृति० for ०सुखो निर्वृति० P.
६. करैरपि for कराभ्यामपि P.

र्ष्येति नीतिः । शून्ये विजने स्थितेन योगिनाऽऽनन्दो लभ्यत इति युक्तिः । राजरषि-कस्य ॥ ४२४ ॥

जे लीणभमरभरभग्गगोच्छआ आसि णइअड्डुच्छंगे ।

कालेण वंजुला पिअवअस्स ! ते खण्णुआ जाआ ॥४२५॥

ये लीनभ्रमरभरभग्नगुच्छका आसन्नदीतटोत्सङ्गे ।

कालेन वञ्जुलाः प्रियवयस्य[1] ! ते[2] स्थाणवो जाताः ॥

कुलटा पूर्वसङ्केतभङ्गमुपनायकं श्रावयति—जे लीणेति । लीना आश्लिष्टाः । स्याद् गुच्छकस्तु स्तबक इत्यमरः[3] । वंजुलो वेतसोऽशोको वा । वंजुलः पुंसि तिलिसे वेतसाशोकयोरपीति मेदिनी[4] । कालः समयो धर्मस्य कारणमिति धर्मः । नीतावप्येवम् । सर्वं चेदमनित्यमिति युक्तिः । दशरथस्य ॥ ४२५ ॥

खणभंगुरेण पेम्मेण माउआ दूमिअ म्हि एत्ताहे ।

सिविणअणिहिलंभेण व दिट्ठपणट्ठेण लोअम्मि ॥४२६॥

क्षणभङ्गुरेण प्रेम्णा मातृष्वसः[5] दूनास्मि[6] इदानीम्[7] ।

स्वप्ननिधिलम्भेनेव[8] दृष्टप्रनष्टेन लोके ॥

काचित्सती नायिकां मानान्निषेधयति । खणेति—लोके क्षणभङ्गुरेण एतावतैव प्रेम्णा उपतप्तास्मीत्यन्वयः । माउआ मातृष्वसरि देशी । अस्थिरस्नेहे पुंसि नित्यमुद्वेगो भवतीति क्षणभङ्गयौवनादि दृष्ट्वा धर्मे मनः कर्तव्यमिति धर्मः । प्रेमचलं ज्ञात्वा सेवकेन प्रभौ न विश्वसनीयमिति नीतिः । सर्वमनित्यमिति युक्तिः । सरणस्य ॥४२६॥

चाओ सहावसरलं विच्छिवइ सरं गुणम्मि वि पडंतं ।

वंकस्स उज्जुअस्स अ संबंधो किं चिरं होइ ॥४२७॥

चापः स्वभावसरलं विक्षिपति शरं[10] गुणेऽपि पतन्तम्[11] ।

वक्रस्य ऋजुकस्य च[12] सम्बन्धः किं चिरं भवति[13] ॥

---

१. प्रियवयस्ये for प्रियवयस्य P.

२. एते for ते P.

३. P 83. V. 16.

४. P. 210. V. 129. तिनिशे for तिलिशे is correct.

५. मातृषुस for मातृष्वसः P.

६. उपतप्तास्मि for दूनास्मि P.

७. एतावतैव for इदानीम् P.

८. ० लाभेनैव for ०लम्भेनेव P.

९. विच्छुहइ for विच्छिवइ Weber.

१० शरं is missing in P.

११. वर्तमाने for पतन्तम् P.

१२. अपि for च P.

१३. तिष्ठ for भवति P.

काश्चिन्मनस्विनी सौभाग्यदृप्तां प्रत्युदासीनं कश्चित्पुरुषमुपालभ्य तां निवारयन्ती स्निग्धा सखी वदति—मालइकुसुमाइ इति ॥ सुलुञ्चि फावण इति पाठे मानानि कृत्वेत्यर्थः। निर्गुणानामपि तत्सम्पत्तीनां सौभाग्यसम्पत्तिः फर्तव्यास्तीति मा दृप्ता साहङ्कारा भवेति। पापक्रियारब्धाऽनेकामपि पापक्रियां जनयतीत्यतस्तत्प्रसङ्ग एव त्याज्य इति धर्मः। कृतापराधे प्रतीतिर्न कार्येति नीतिः। संसारवैचित्र्यं दृष्ट्वा व्यवहर्तव्यं बुधैरिति युक्तिः। नच निर्गुणानाम् अत्यर्थगुणानाम्। निर् इत्युपसर्गोऽत्यर्थनिषेधबहिष्करणनिश्चयेषु वर्तत इत्युपसर्गवृत्तिः। मृगाङ्कलक्ष्म्याः ॥४२९॥

तुंगाण विसेसनिरंतराण सरसवणलद्धसोहाणं।
कअकज्जाण भडाण व थणाण पडणं पि रमणिज्जं ॥४३०॥

तुङ्गयोर्विशेषनिरन्तरयोः सरसव्रणलब्धशोभयोः।
कृतकार्ययोर्भटयोरिव स्तनयोः पतनमपि रमणीयम् ॥

कोऽपि साभिलाषो मध्यमयौवनायाः स्तनावालोक्य सपरिहासमाह—स्वस्तनयोः पतने विमनस्कां नायिकां सम्बोधयन्ती सखीदमाह वा—तुंगाणेति। तुङ्गाबुन्नमहान्तौ। विशेषोऽतिशयः। निरन्तरयोर्निबिडयोः। भटपक्षे-सम्मुखयोः सरसव्रणैर्नखक्षतैः घातैश्च लब्धशोभयोः। कृतं कार्यं युवमोहनं प्रहारश्च याभ्यां तयोः ईदृशोः। कृतकार्यत्वादेवानयोः पतनं रमणीयम्। कृतपरोपकारस्य पतनमपि श्लाघ्यम्—

दानं वित्ताद्दृतं वाचः कीर्तिधर्मौ तथायुषः।
परोपकरणं कायादसारात्सारमुद्धरेत् ॥

इति धर्मः। सुभटत्वं सर्वकार्यसाधकमिति नीतिः। संसारस्यानित्यत्वप्रतिपादने कश्चिच्छिष्यं बोधयतीति युक्तिः। श्लिष्टोपमेयम्। लक्ष्मणस्य ॥४३०॥

परिमलणसुहा गुरुआ अलद्धविवरा सलक्खणाहरणा।
थणआ कव्वालाअव्व कस्स हिअए ण लग्गंति ॥४३१॥

परिमलनसुखा[3] गुरुका[4] अलब्धविवराः[5] सलक्षणाभरणाः[6]।
स्तनकाः[7] काव्यालापा इव[8] कस्य हृदये न लगन्ति[9] ॥

१. ०लब्ध० is missing in P.
२. भटयो is missing in P.
३. ०सहौ for ०सुखा P.
४. ०गुरुकौ for ०गुरुका P.
५. ०विरलौ for ०विवराः P.
६. ०भरणौ for ०भरणाः P.
७. स्तनकौ for स्तनकाः P.
८. ०लापवत् for ०लापा इव P.
९. लगतः for लगन्ति P.

कस्याश्चिन्नायिकायाः सुरसाढ्यत्वेन सर्वमनोपभोग्यतां सूचयन्ती सखी स्तनयोः सम्बर्षे वर्णनमाह—परिमलयोति । परिमलौ पीडनसद्रूपौ । गुरुकावुर्धारधरौ । दूषणरहितौ । विवरे छिद्रावकाशौ । सल्लक्षणौ सौभाग्यादिसूचकचिह्नौ । भरतोत्कृष्ट्-त्रिंशत्काव्यलक्षणोपेतौ । यथा काव्यालापाः काव्यानामाभाषणानि सर्वेषां हृदये लगन्ति स्तनावपीदृशौ लगतः । श्लेषोपमेयम् । यत्कर्म सर्वेषां मनोहारि तदेव कर्तव्यमिति धर्मः । तदेव वक्तव्यं यत्सर्वेषां हृदयगतं भवतीति नीतिः । काव्यालापैः संसारिहृदयमाकृष्यते नतु तत्त्वज्ञानिनामिति युक्तिः । पोटिसस्य ॥४३१॥

खिप्पइ हारो थणमंडलाहि तरुणीहि रमणपरिरंभे ।

अच्चिअगुणा वि गुणिणो लहंति लहुअत्तणं काले ॥४३२॥

क्षिप्यते हारः स्तनमण्डलात्तरुणीभी[1] रमणपरिरम्भे ।

अर्चित[2]गुणा अपि गुणिनो लभन्ते लघु[3]कत्वं काले ॥

गृहकार्यत्वरया काचित् सहासम्भाषणाद् विमनस्कमुपपतिं सम्बोधयन्ती दूतीमाह । कृतादरेऽपि समयवशाद् अनादृतः स्यादिति दृष्टान्ते कोऽपि कमपि शिक्षयन् प्राह—खिप्पइ इति । क्षिप्यते अन्यत्र नीयते । पूर्वोक्ते सदृष्टान्तमर्थान्तरन्यासमाह—अर्चितेति । अर्चितः पूजितः । अर्घः पूजाविधौ मूल्ये मेदिनी[4] । धार्मिकैः सदा स्थिरैर्भवितव्यमिति युक्तिः । अभिमतोचितकार्यविरोधिनो गुणवन्तोऽपि विपश्चिता अवमान्यन्ते[5] इति नीतिः । तत्त्वज्ञानिनामवमानादि न भवतीति युक्तिः । मकरन्दस्य[6] ॥४३२॥

अण्णो को वि सुहावो मम्महसिहिणो हला हआसस्स ।

विज्झाइ णीरसाणं हिअए सरसाण पज्जलइ ॥ ४३३ ॥

अन्यः कोऽपि स्वभावो मन्मथशिखिनो हला[7] हताशस्य ।

निर्वाति नीरसानां हृदये[8] सरसानां[9] प्रज्वलति ॥

कापि मुग्धवधूः प्रियस्य निःस्नेहतामात्मनश्चानुरागं सूचयन्ती सखीमिदमाह—अण्णो को वीति । अन्योऽसाधारणादादृक्त्वान्मन्मथः शिखीव हले ! सखि ! निर्वाणमस्त्वं

---

१. ०तरुण्या for ०तरुणीभि० P.
२. अर्घित० for अर्चित० P.
३. लघुत्वं for लघुकत्वं P.
४. P. 34. verse 2.
५. अवमनन्यन्त for अवमान्यन्त P.
६. मकरन्यस्य for मकरन्दस्य P.
७. हले for हला P.
८. हृदये is missing in P.
९. P. adds स्फटित after नीरसानाम् ।

गच्छति । अन्यस्यापीरेवं स्वभावो न भवतीति भावः । नित्यं नीरसे धर्मकृत्ये प्रवर्तनीयमिति धर्मः । कार्याण्यपि नैकस्वभावा भवन्तीति नीतिः । अनेकस्वभावं सांसारिकं सुखमन्यत्तु विलक्षणमिति युक्तिः ॥४३३॥

तह तस्स माणपरिवड्ढिअस्स चिरपणअबद्धमूलस्स ।

मामि ! पडंतस्स सुओ सद्दो वि ण पेम्मरुक्खस्स ॥४३४॥

तथा तस्य मानपरिवर्द्धितस्य चिरप्रणयबद्धमूलस्य ।

मातुलानि[1] ! पततः श्रुतः शब्दोऽपि न प्रेमवृक्षस्य ॥

केनचिदभीष्टेन सह प्रेमभङ्गात् कापि सद्भावान्मातुलानीमिदमाह—तह तस्सेति । प्रेमवृक्ष [redacted] । पततः अपसरतस्त[2](?) मामि ! मातुलानि ! शब्दोऽपि न श्रुतः । तथा तेन प्रकारेणायासेन परिवर्द्धितस्य प्रेमवृक्षस्य न चिरं व्याप्य प्रणयेनाभ्यर्थनेन बद्धं मूलं येन तस्य । अन्यस्य एतादृशस्य पततः श्रूयत एव । केनचित्तलेन प्रेमवृक्षस्य कर्तनं कृतं पतनशब्दोपि न श्रुतः । प्रियस्य परुषं वचनमपि न श्रुतमेवमेव प्रेमापगतमिति भावः । प्रणयः प्रेम्णि याच्ञायां मेदिनी[3] । क्षीणपुण्यानां विनिपातो भवतीति धर्मः । उपचारेण विना कार्यभङ्गे सन्तापो भवतीति नीतिः । प्रेमादीनामनित्यताप्रतिपादनेन युक्त्युक्तिः । शालवाहनस्य ॥ ४३४ ॥

पाअपडिओ ण गणिओ पिअं भणंतो वि अप्पिअं भणिओ ।

वच्चंतो वि ण रुद्धो भण कस्स कए कओ माणो ॥४३५॥

पादपतितो न गणितः प्रियं भणन्नप्यप्रियं[4] भणितः ।

व्रजन्नपि न रुद्धो भण कस्य कृते कृतो मानः ॥

अतिग्रहिलां मानिनीं सखी सपरिहासमिदमाह—पाअपडिओ इति । पादपतितः पतिर्यदि यत्सन्निधाने मानः कृतस्तस्य गमने मानेन किं फलमिति भाव. ।

' यशसस्तपसश्चैव क्रोधो नाशकरः परः ।

तस्मात्कोपो न कर्तव्यः '

इति धर्मः । रोषिणामुचितकर्तव्यज्ञानं न स्यादिति नीतिः । तत्त्वज्ञानिना मानो न कर्तव्यः । निर्मानमोहा जितसङ्गदोषा[5] इत्यादेः । मानस्य ॥४३५॥

---

१. मामि for मातुलानि P.

२. तस्य for त is suggested.

३. Cf. प्रणयः प्रश्रये प्रेम्णि याच्ञाविश्रम्भयोरपि. P. 161. Verse 68.

४. विप्रियं for अप्रियं P.

५. Bhagavadgitā 15. 5.

पुसइ खणं धुअइ खणं पप्फोडइ तक्खणं अआणंती ।
मुद्धवहू थणवट्टे दिण्णं दइएण णहरवअं ॥ ४३६ ॥

प्रोञ्छति क्षणं धावयति[1] क्षणं प्रस्फोटयति [2]तत्क्षणमजानती[3] ।
मुग्धवधूः स्तनपट्टे[4] दत्तं दयितेन नखरपदम्[5] ॥

कापि नवोढा प्रियदत्तं नखपदं लोहितं दृष्ट्वा किमिदमिति सम्भ्रान्तां बहुविधां चेष्टामाचरन्तीं दृष्ट्वाऽपरस्याः कथयति—पुसइ इति । धावयति प्रक्षालयति । प्रस्फोटयति हस्तनति । 'नखोऽस्त्री नखरोऽस्त्रियाम्' अमरः[6] । स्तनपट्टं प्रोञ्छतीत्यन्वयः । नखरपदमजानती । अज्ञानात्कृतमशौचं नाशोचहेतु भवतीति धर्मः । ज्ञाते तत्त्वे बहुभिरुपायैः दुरुलम्भनं कर्तव्यमिति नीतिः । क्लिष्टपदेशं तत्त्वज्ञाने न भवतीति युक्तिः । पालितस्य ॥ ४३६ ॥

वासारत्ते उण्णअपओहरे जोव्वणे व्व वोलीणे ।
पढमेक्ककासकुसुमं दीसइ पलिअं व धरणीए ॥ ४३७ ॥

वर्षारात्रे उन्नतपयोधरे यौवन इव[7] व्यतिक्रान्ते ।
प्रथमैककाशकुसुमं दृश्यते पलितमिव धरण्याः ॥

शरद्वर्णनेनासती सङ्केतस्थानमाह—वासारत्त इति । उन्नताः पयोधरा मेघा यत्र । वर्षाकाले व्यतिक्रान्ते धरित्र्याः प्रथममेकं काशस्य कुसुमं दृश्यते । पयोधरौ मेघस्तनौ । धरित्र्याः पलितमिव । जरसा शौक्ल्यमित्यनित्यतां समयस्याकलय्य धर्मश्चिन्तनीय इति धर्मः । यावदेव यौवनादिसामर्थ्यं विद्यते तावदेव कार्यक्षमतेति नीतिः । भूमेरपि यौवनं क्षणिकं, मुक्तौ यतनीयमिति युक्तिः । तस्यैव ॥ ४३७ ॥

कत्थ गअं रइबिंबं कत्थ पणट्ठाव चंदतारात ।
गअणे वलाअपंतिं कालो होरं व कड्ढेइ ॥ ४३८ ॥

कुत्र गतं रविबिम्बं[8] कुत्र प्रनष्टाश्चन्द्रतारकाः ।
गगने बलाकापङ्क्तिं कालो[9] होरामिवाकर्षति[10] ॥

---

१. धावति for धावयति P.
२. तत् is missing in P.
३. अजानन्ती for अजानती P.
४. ॰पटे for ॰पट्टे P.
५. र is missing in P.
६. II. 6. 83.
७. P. puts इव before यौवने.
८. ॰बं कुत्र मनष्टा is missing in P.
९. काले for कालो P.
१०. ॰मिव for ॰मिवा॰ P.

काचिदसतीमभिसाराय प्रोत्साहयन्ती दूती समयस्य निर्उयोतिष्मतां वर्णयति। विरहिणीं वर्षासु अनागतपतिकां सम्प्रति शरद्यागमिष्यत्येवेति समाश्वासयन्ती दूती वा प्राह—कत्थ गअं इति। प्रनष्टा अदृश्यतां गताः। बलाका कामुकी वकी च। कालो वर्षा एव। यथा कालः समयः सूर्यादिग्रहप्रविसन्धानाय होरां कठिन्यादिकृतां कर्षति तथेत्यर्थः। सापि रेखा धवला। होराशास्त्रं ज्योतिश्शास्त्रमिति टीकान्तरे। 'होरा-लग्नेपि राश्यर्द्धे रेखाशास्त्रभिदोरपि' इति मेदिनी। होरयापि रविचन्द्रतारायाम् उद-यास्तमयादि निर्णीयते। कालश्च सर्वे...मतो रविचन्द्राद्यैर्गतिर्धर्मपरैरन्वेष्टव्यमिति धर्मः। विपदि सेवकैः स्वामिनोऽनुनेया इति नीतिः। रविचन्द्रादयोप्यनित्या इति यत्न आस्थेयो मुक्ताविति युक्तिः। शालवाहनस्य॥ ४३८॥

अविरलपडंतणवजलधारारज्जुघडिअं पअत्तेण।
अपहुत्तो उक्खेत्तुं रसइ व मेहो महिं उअह॥४३९॥

अविरलपतन्नवजलधारारज्जुघटितां प्रयत्नेन।
अप्रभवन्नुत्क्षेप्तुं रसतीव मेघो महीं पश्यत॥

चिरतरा समयं प्रत्यवतरं जारमाकलय्यान्यमनस्कं कर्तुं मेघानामतिवर्षणेन न कोऽप्यायास्यतीति सूचयन्तीदमाह—अविरलेति। प्रयत्नेन मेघो महीमुत्क्षेप्तुमुत्तो-लयितुम् असमर्थ इव रसति शब्दं करोतीत्यन्वयः। अविरलमविरतं पतन्त्यो या नवजलधारास्ता एव रज्जवस्तद्घटितामुद्ग्रथितां महीम्। अन्यदपि रज्जुभिरुत्तोल्यते। पतितानामुद्धारः कृच्छ्रेणापि कर्तव्य इति धर्मः। 'अशक्यारम्भवृत्तीनां कुतः क्लेशादृते फलम्' इति नीतिः। क्रमशः सर्वमभ्यसनीयं तेन मुक्तिरपि सुखेन भवतीति युक्तिः। कहि-लस्य॥ ४३९॥

ओ हिअअ! ओहिदिअहं तइआ पडिवज्जिऊण दइअस्स।
अत्थक्काउल! वीसंभघाइ! किं मइ समारद्धं॥ ४४०॥

हे हृदय! अवधिदिवस तदा प्रतिपद्य दयितस्य।
अकस्माद्दाकुल! विस्रम्भघातिन्! किं त्वया समारब्धम्॥

१. P. 176, V. 102.
२. Space left blank in P.
३. अन्वेष्टव्या for अन्वेष्टव्यम् is suggested.
४. उक्खिविउं for उक्खेत्तुं Weber.
५. ०घटित० for ०घटितां P.
६. असह्मान for अप्रभवन् P.
७. ओ हृदय सं तथा for हे हृदय P.
८. कि...मारब्धम् for किं त्वया समा-रब्धम् P.

कापि प्रियकृतावधिदिनमप्रतीक्ष्य सन्तप्ता हृदयनिर्भर्त्सनं कुर्वतीदमाह—ओ हिअअ इति। ओ दुःखसूचने। हे हृदय! किं त्वया समारब्धम् इत्यन्वयः। प्रतिपन्न स्वीकृत्यातुलं यथा स्यादेवम्। विस्रम्भो विश्वासस्तद्धातिन्। हे हृदय! मां त्यक्तुमर्हसीति भावः। यस्त्वन्यथा करोति स एव विश्वासघातको भवति। स्वीकृतापरिपालनमधर्मस्तथा च तन्न विधेयमिति धर्मः। अविश्वसनीये विश्वासो न विधेय इति नीतिः। हृदयदोषैरपि सांसारिकदुःखानुभुक्तिः। 'समौ विस्रम्भविश्वासौ'। अमरः[1]। वल्लोलस्य ॥४४०॥

जो वि ण आणइ तस्स वि कहेइ भग्गाइ तेण वलआइं।

अइउज्जुआ वराई अहव पिओ से हआसाए ॥४४१॥

योऽपि न जानाति तस्यापि[2] कथयति भग्नानि तेन[3] वलयानि।

अतिऋजुका[4] वराकी अथवा प्रियस्तस्या[5] हताशायाः ॥

नायकेन येनापि भग्नवलयां वलयभङ्गमितस्ततः ख्यापयन्तीं कामपि दृष्ट्वा एकाऽपरस्याः कथयति। स्वनायकेन कस्याश्चिद् व्यवहारमाशङ्कमाना काऽपि सचकितं वा प्राह—जो वीति। तेन प्रियेण भग्नानीव कथयतीत्यर्थम्। अथवा संशये असौ वा हताशाया एव अस्या एव पतिरृजु' अतिऋजुत्वात् किमज्ञातं करोति प्रियत्वादनुरागेण वेति भावः। तेनैव भग्नेन वलयेन तस्यार्जवत्वं स्फुटम्, संगोप्यस्य रतस्य प्रकाशनात्। तथा च कर्म कर्तव्यं यथाऽपमानादि न भवतीति धर्मः। नीचाः स्वसम्भावनार्थे ईश्वरादिकृतं पुरस्कारमाविष्कुर्वन्ति तदोत्तमैर्न विधेयमिति नीतिः। गुरुणा यदुपदिष्टं रहस्यं तत्कस्यापि योगिना न प्रकाश्यमिति युक्तिः। अट्टराजस्य ॥४४१॥

सामाइ गुरुअजोव्वणविसेसभरिए कवोलमूलम्मि।

पिज्जइ अहोमुहेण व कण्णवअंसेण लावण्णं ॥ ४४२॥

श्यामाया गुरुकयौवनविशेषभरिते[6] कपोलमूले[7]।

पीयतेऽधोमुखेनेव कर्णावतंसेन लावण्यम्[8] ॥

अतिसुन्दर्या नायिकायाः कपोलेऽधोमुखं कर्णावतंसकं दृष्ट्वा तदुत्प्रेक्षमाणा काचिदपरस्याः कथयति। स्वयंदूतो नायकः स्वाभिप्रायं वा नायिकां श्रावयति। सामाइ इति। तस्या श्यामाया लावण्यं सौन्दर्यं कर्णावतंसेन पीयत इत्यन्वयः।

---

१. II. 8. 23.

२ तस्या अपि *for* तस्यापि P.

३. तव for तेन P.

४. अय *for* अति० P.

५. पतिरस्या for प्रियस्तस्या P.

६. गुरु० for गुरुक० P.

७. ०मूले for ०भरिते P.

८. लावण्यम् *is missing* in P.

विशेष उत्कर्षः । भूते पूर्वो । द्वितीयामासे अहमपि त्वल्लावण्यमुपभोक्तुमिच्छामीति भावः । शीते या चोष्णागात्रा स्यादित्यादिना लक्षणावती सा । "उत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे" कोषः[1] । कर्णपदोपादानं सान्निध्यादिख्यापनाय । तदुक्तं काव्यप्रकाशे—[2]"कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः । सान्निध्यसूचनाय" तेन चार्थोत्कर्षः प्रतीयते। यथा ह्यवतंसः कर्णसन्निहितो भूषाहेतुर्न तथाऽन्यत्रस्थ इति। उत्प्रेक्षेयम् । तरुण्यो नित्यं रक्षणीया इति धर्मः । उत्तमे वस्तुन्यचेतनोऽपि साभिलाषो भवतीति नीतिः । स्त्रीसन्निधिर्वर्ज्येत इति युक्तिः । माधवस्य ॥ ४४२॥

सेउल्लिअसव्वंगी गोत्तग्गहणेण तस्स सुहअस्स ।
दूइं अप्पाहेंती तस्सेअ घरंगणं पत्ता ॥ ४४३ ॥

स्वेदार्द्रितसर्वाङ्गी गोत्रग्रहणेन तस्य सुभगस्य ।
दूतीमध्याप्यमाना तस्यैव गृहाङ्गणं प्राप्ता ॥

नाहमेका तस्य सुभगस्य गुणेन वशीकृता, अन्यापि सद्गुणवशीकृता एवं कृतवतीति कापि सखीं प्राह।किं वा गाथास्तमेव कापि कस्याश्चित् कथयति—सोओन्मिअ[3] इति । काचित्तस्यैव सुभगस्य गृहाङ्गणं प्राप्ता... [4] तं नाम । अध्यापनमत्र सन्देशकथनरूपम् । अस्तु तावद्दर्शनालिङ्गनसम्भाषणादिकं तस्य नामग्रहणादेव स्वेदादयो विकारा जायन्त इति कामप्यलब्धसुरतामुत्कण्ठयति वा । धात्रि[5] । धातृपुण्यकथयैव पुलकिता भवन्तीति धर्मः । कार्यिणा स्वकार्यमपेक्ष्य लाघवगौरवे नापेक्षणीय इति नीतिः । वासितान्तःकरणा बाह्यनिरपेक्षा भवन्तीति युक्तिः । कण्ठाभरणे[6] विप्रलम्भपरीष्टिषु अभियोगतो दूतसंप्रेषणेन प्रेमपरीक्षेयम् । स्तम्भहस्य ॥ ४४३ ॥

जम्मंतरे वि चलणे जीएण खु मअण ! तुज्झ अच्चिस्सं ।
जइ तं पि तेण बाणेण विज्झसे जेण हं विज्झा ॥४४४॥

जन्मान्तरेपि[7] चरणौ[8] जीवेन खलु मदन ! [9]तवार्चयिष्यामि[10] ।
यदि तमपि तेन बाणेन विध्यसि[11] येनाहं विद्धा ॥

---

१. Amara. III. 3. 227.
२. VII. 58, KP. reads सन्निधानादिबोधार्थम् for सान्निध्यसूचनाय.
३. सोओन्मिअ for सेउल्लिअ P.
४. A few syllables are missing in P.
५. धात्रि is redundant
६. P. 318.
७. P. reads द्वितीयेपि for पि.
८. चरणं for चरणौ P.
९. मदन for तव P.
१०. ०र्जयि० for ०र्चयि० P.
११. विध्यसे for विध्यसि P,

काचित्प्रोषितपतिका कामबाणाविद्धा मदनमेवोद्दिश्य प्रियस्य शीघ्रागमनाय सकाकु प्रार्थयते—जम्मंतरेति । चरणं मदनस्यैव प्रकरणात् । द्वितीये जन्मनि जन्मान्तरेपि । जम्मांतराइ वीसवीति पाठे विंशतिजन्मान्तराण्यपीत्यर्थः । तं कान्तम् । तथा चायं विद्धश्चास्मत्पीडां[1] ज्ञास्यतीति भावः । जन्मान्तरकृतस्य[2] कर्मणः फलं भुज्यत इति धर्मः । सेवा फलत्येवेति नीतिः । कृतं कर्म धर्मे[3] भवतीति युक्तिः । मुग्धस्य ॥४४४॥

कुरुणाहो व्विअ पहिओ दूमिज्जइ माहवस्स मिलिएण ।
भीमेण जहिच्छाए दाहिणवाएण छिप्पंतो ॥४४५॥

कुरुनाथ इव पथिको दूयते[4] माधवस्य मिलितेन ।
भीमेन यथेच्छया[5] दक्षिणवातेन[6] स्पृश्यमानः[7] ॥

वसन्ते कान्तस्य निवारणार्थं कापि पथिकस्यावस्थां वर्णयति—कुरुणाहो इति । भीमेन यदृच्छया स्वाच्छन्द्येन स्पृशता दक्षिणपवनेन मलयानिलेन । माधवस्य वसन्तस्य मिलितेन । पथिको दुर्मनायते विमनस्को भवति । यथा कुरुनाथो दुर्योधनो भीमेन वृकोदरेण दुर्मनायते तथेत्यर्थः । कृष्णस्य मिलितेन दक्षिणस्य पवनेन सारथ्येन । दक्खिणवाएणेति पाठे दक्षिणवातेन । अपरत्राकारप्रश्लेषाद् अदक्षिणेन वातेन । वादेन आपणेन स्पृश्यमानः । कुरुनाथ. । दुर्मनस्कत्वेऽयमेव हेतुः । सन्धावचामल्लोपविशेषा इत्यकारस्य लोपः । सर्वात्मना श्रीवासुदेवमिलितेन भवितव्यमिति धर्मः । शत्रुमिलितो विपक्षोऽतिदुःसहो भवतीति नीतिः । संसारी वातेनापि दुःखितो भवतीति युक्तिः । गजेन्द्रस्य ॥४४५॥

णिअपक्खारोविअदेहभारणिउणं रसं लहंतेण ।
विअसाविऊण पिज्जइ मालइकलिआ महुअरेण ॥४४६॥

निजपक्षारोपितदेहभारनिपुणं रसं लभमानेन[8] ।
विकास्य[9] पीयते मालतीकलिका[10] मधुकरेण[11] ॥

कश्चिन्नवीनं सुरततत्त्वानभिज्ञं नूतनप्रेयसीकं नायकं भ्रमरव्याजेन काचिच्छिक्ष-

---

1. ॰श्चास्सत् for ॰श्चासत् P.
2. ॰तस्यै for ॰तस्य P.
   ॰तस्यैव is suggested.
3. धर्मे......वती P.
4. दुर्मनायते for दूयते P.
5. यदृच्छया for यथेच्छया P.
6. ॰पवनेन for ॰वातेन P.
7. स्पृशता for स्पृश्यमानः P.
8. लिहता for लभमानेन P.
9. विकाश्य for विकास्य P.
10. P. adds पीयते after ॰कलिका
11. मधुकरेण is missing in P.

यति—पि्अपक्खेति। निजे पक्षे पतत्रे आरोपितो दत्तो देहस्य भारो गौरवं तेन निपुणं यथा स्यादेवम्। कलिकामेव विकास्य रसं मकरन्दमास्वादयता भ्रमरेण। त्वमप्यप्रौढायामुचितेन यत्नेन एनां भुङ्क्ष्वेति भावः। 'सुमना मालतीजातिः' अमरः[१]। निजे स्वीये पक्षेऽनुकूले धर्मे यथारोपितशरीरभारो भवति स एव रसमनुरागं लोकेऽर्थादास्वादं याति प्राप्नोतीति धर्मः। निजे पक्षे य एव तिष्ठति स एव परं रसमास्वादयतीति नीतिः। खिन्नेन परं रसोऽनुभूयते न पुनर्योगिनेति युक्तिः। 'पक्षः पतत्रेऽनुकूले' विश्वः[३]। 'रसो रागे द्रवे' मेदिनी[४]। तस्यैव ॥ ४४६ ॥

जाव ण कोसविआसं पावइ ईसीसमालईकलिआ।
मअरंदपाणलोहिल्ल भमर! ताव च्चिअ मलेसि ॥४४७॥

यावन्न कोपविकासं प्राप्नोतीषन्मालतीकलिका[५]।
मकरन्दपानलोभिल[६] भ्रमर[७]! तावदेव मर्दयसि[८] ॥

अप्राप्तयौवनामत्यन्तकोमलाङ्गीमेव कामयमानं विरसं कमपि पुरुषं निषेधयन्ती कापि वदति। अनुरागाकृष्टहृदया उपभोग्येऽपि वस्तुनि स्पृहां दर्शयन्तीति भावः। कलिकाभङ्गोऽतिनिषिद्ध इति धर्मः। अकाले कार्यमारभमाण उपहसनीयः स्यादिति नीतिः। तत्त्वज्ञानिनामेवोपदेशो विमर्दसहः स्यादिति युक्तिः। जोजदेवस्य ॥४४७॥

अकअण्णुअ! तुज्झ एक पाउसराईसु जं मए खुण्णं।
उप्पेक्खामि अलज्जिर! अज्ज वि तं गामचिक्खिल्लं ॥४४८॥

अकृतज्ञ! तव कृते प्रावृड्रात्रिषु यन्मया[९] क्षुण्णम्।
उत्प्रेक्षे अलज्जाशील! अद्यापि तं ग्रामकर्दमम् ॥

कापि मन्दस्नेहं क्रमेण स्त्र्यन्तरासक्तं नायकमुपालभते—अकअण्णुअ इति। क्षुण्णं ग्रामकर्दमम्। अद्यापि पश्यामीत्यन्वयः। वर्षासु मम कर्दमसंकुले मार्गे संचरणक्लेशं मदीयं न स्मरसि येन त्वमस्मदप्रियमाचरसीति भावः। खुन्नमिति पाठे भग्नम्। एकाकिनो वर्षासु प्रान्तरावस्थानं निषिद्धमिति धर्मः। अक्लेशोपमर्दनेन मन्दस्नेहः

१. पि्अवक्खेति is suggested.
२. II. 4. 72.
३. Cf P. 182. Verses 5-6.
४. Cf. P. 231. V. 9.
५. प्राप्नोति मनागपि मालती॰ for प्राप्नोतीषदीषन्मालती॰ P.
६. ॰लोभिष्ट for ॰लोभिल
७. भ्रमर is missing in P.
८. P. adds कलिकामेव after मर्दयसि.
९. मया is missing in P.

प्रभुरनुकूलयितव्य इति नीतिः । अजितेन्द्रिया विजने नित्यमुद्विग्ना भवन्तीति युक्तिः । कैशोराय ॥ ४४८ ॥

रेहइ गलंतकेसक्खलंतकुंडलगलंतहारलआ ।
अद्धुप्पइआ विज्जाहरि व्व पुरुसाइरी बाला ॥ ४४९॥

राजते गलत्केश[1]स्खलत्कुण्डलगलद्धारलता ।
अर्द्धोत्पतिता विद्याधरीव पुरुषायिता[2] बाला ॥

विपरीतरतासक्तां कामपि दृष्ट्वा एकाऽपरस्याः कथयति—रेहइ इति । गलति अधः पतति केशो स्खलत् प्रतिहतं भवत् कुण्डलं यस्याः सा, गलन्ती अधःपतन्ती हारलता यस्याः सा, पश्चात्कर्मधारयः । बालाप्यर्द्धोत्पतिता विद्याधरी अर्द्धोत्पतिता पूर्वोक्तविशेषणवती भवतीति । पत्युरभिमतं कुर्वती स्त्री विद्याधरीव स्वर्गस्था शोभत इति ध्वनितमिति धर्मः । कार्ये दत्तावधानाः केशादिस्खलनमपि न जानन इति नीतिः । रसध्यानवासितान्तःकरणा बाह्यनिरपेक्षा भवन्तीति युक्तिः । शालवाहनस्य ॥४४९॥

जइ भमसि भमसु एमेअ कण्ह ! सोहग्गगव्विरो गोट्ठे ।
महिलाणं दोसगुणे विआरिउं जइ खमो सि तुमं ॥४५०॥

यदि भ्रमसि भ्रम[3] एवमेव[4] कृष्ण ! सौभाग्यगर्वितो गोष्ठे ।
महिलानां दोषगुणौ विचारयितुं यदि क्षमोऽसि त्वम्[5] ।

काचित्सौभाग्यदर्पिता गोपी सर्वगुणसम्पूर्णा कृष्णमुद्दिश्य वदति—जइ भमसीति । धार्मिकैः कृष्णानुसन्धानपरैर्भवितव्यमिति धर्मः । स्त्रीषु विश्वासो न कर्तव्य इति नीतिः । यस्तु सर्वज्ञानां स च स्त्रीणां गुणदोषौ ॥ विचारयतीति युक्तिः । तस्यैव ॥४५०॥

संझासमए जलपूरिअंजलिं विहडिएक्कवामअरं ।
गोरीअ कोसपाणुज्जअं व पमहाहिवं णमह ॥ ४५१ ॥

सन्ध्यासमये जलपूरिताञ्जलिं विघटितैकवामकरम् ।
गौर्यै[6] कोषपानोद्यतमिव प्रमथाधिपं नमत ॥

---

१. क्लेश for केश P.
२. पुरुषायितशीला for पुरुषायिता P.
३. भ्रमस्व for भ्रम P.
४. इत्थम् for एवम् P.
५. P. reads ०गुणविचारणक्षमोऽस्यपि न भवसि for ०गुणौ विचारयितुं यदि क्षमोऽसि त्वम्
६. गौर्याः for गौर्यै P.

कश्चित्कामपि प्रेयसीं दुर्लभां प्रतियियासुरभीष्टदेवतां नमस्करोति—संझासमए इति। कोपो गण्डूषः। प्रथमं सन्ध्यासमये जलेन पूरिताञ्जलिः प्रमथाधिपोऽनन्तरं कामपि कामिनीमयमुपास्ते इति गौर्या सेर्ष्यमवलोकितो विघटित एको वामः करो येन स प्रमथाधिपो, दक्षिणेन करेण गण्डूषपानयोग्येन गण्डूषं विधाय गौर्याः कोपपानायोद्यतमिव तम्। अन्यस्या उपास्तये मयेदं न कृतं किन्तु भवत्या एव गण्डूषदानायेत्यपराधमार्जनाय भगवतैवं कृतमिति भावः। सन्ध्योपासनं धर्मः। सर्वेषां नतिः कर्तव्येति नीतिः। ज्ञानं तु शङ्करादिच्छेदिति मुक्त्युपायस्य तत्त्वज्ञानहेतोः श्रीभगवतो महादेवस्य नतिः कर्तव्येति युक्तिः॥ ४५१॥

गामिणिणो सव्वासु वि पिआसु अणुमरणगहिअवेसासु।
मम्मच्छेएसु वि वल्लहाइ उवरिं वलइ दिट्ठी॥ ४५२॥

ग्रामण्याः सर्वास्वपि प्रियास्वनुमरणगृहीतवेषासु।
मर्मच्छेदेष्वपि वल्लभाया उपरि वलते[1] दृष्टिः॥

कस्यचिद् ग्राममुख्यस्य शेषदशापन्नस्यानुमरणोद्यतबहुपत्नीकस्य तस्यामपि दशायां प्रेयसीं निरीक्षमाणस्य भावमेकाऽपरस्याः कथयति—गामिणिणो इति। ग्रामणीर्ग्राममुख्यः, येषस्तत्कालमाभरणम्। प्रकृते मर्मच्छेदो मरणमेव। सौभाग्योदाहरणमिदम्। अनन्तरभाविमरणे दुर्लभदर्शनत्वादिति भावः। यो वा यत्र रसिकः स तद् मर्ह मरणेऽपि न मुञ्चतीति। स्त्रीणामयं महान् धर्मो यदनुमरणं नामेति धर्मः। अभिमतं साधयतो विपद्यपि बुद्धिर्नापगच्छतीति नीतिः। मरणसमयेऽपि ज्ञानान्मनो विषयैराकृष्यते न पुनर्योगिनामिति युक्तिः। कुमारिलस्य॥ ४५२॥

मामि! सरिसक्खराण वि अत्थि विसेसो पअंपिअव्वाणं।
णेहमइआणं अण्णो अण्णो उवरोहमइआणं॥ ४५३॥

मातुलानि! सदृशाक्षराणामप्यस्ति[2] विशेषः प्रजल्पितव्यानाम्।
स्नेहमयानामन्योऽन्य उपरोधमयानाम्[3]॥

काचिद् गृहीतमाना प्रियेणानुनयता बहुविधमुक्ता सख्या च ततोऽप्यपरितुष्टा सा सखीं सम्बोध्य वदति—मामीति। सदृशं योग्यम्। उपरोध उपाधिः। तथा चायं यद्वदति तच्च न साहजिकेन स्नेहेन किं पुनरुपाधिनेति भावः। जल्पनमसद्भावमायपां न विधेयमिति धर्मः। स्नेहेन वक्तव्यमवचनीयमपीति युक्तिः। तस्यैव॥ ४५३॥

---

1. वलति for वलते P.
2. अपि is missing in P.
3. ०मलिनानाम् for ०मयानाम् P.

हिअआहिंतो पसरंति जाइं अण्णाइं ताइं वअणाइं ।
ओसरसु किं इमेहिं अहरंतरमेत्तमणिएहिं ॥ ४५४ ॥

हृदयात् प्रसरन्ति यान्यन्यानि तानि वचनानि ।
अपसर[1] किमेभिर[2]धरान्तर[3]मात्रभणितैः ॥

काचिन्मानिनी प्रियेणानुनीयमाना तमेवोद्दिश्य वदति—हिअआहिंतो इति । यानि तानि असङ्गतानि वचनानि अर्थात्तव हृदयात् प्रसरन्ति बहिर्भवन्ति अतस्त्वम् अपरसस्व अस्मादेव वचनाद् भ्रष्टो विरतो भव । अधर ओष्ठस्तस्यान्तरमवकाशस्तन्मात्रे यानि भणितानि तैरेतैः किं निष्फलैरित्यर्थः । अयमभिसन्धिः—हृदयेनान्यन्मुखेनान्यद् विसंवादिवचनमभिदधास्यतस्त्वं विरतो भवेति । विसंवादिवचनं न वाच्यमिति धर्मः । धीरेषु असंवादेषु वचनमभिधानीयमिति नीतिः । तत्त्वज्ञानप्रतिपादकेन वाक्येन शिष्या बोधनीया इति युक्तिः । चारदत्तस्य ॥ ४५४ ॥

कह सा सोहग्गगुणं मए समं वहइ णिग्घिण ! तुमम्मि ?
जीअ हरिज्जइ णामं हरिऊण अ दिज्जए मज्झ ॥ ४५५ ॥

कथं सा सौभाग्यगुणं मया समं वहति निर्घृण ! त्वयि ?
यस्य[4] ह्रियते[5] नाम हृत्वा[6] च[7] दीयते मह्यम् ॥

काचिन्नायिका सपत्नीनाम्ना प्रियेण प्रसाद्य व्याहृता तत उपतप्ता सती गोत्रस्खलितापराधिनं नायकं किमपि सोपालम्भमाह—कह इति । ह्रियते गृह्यते । हृत्वा गृहीत्वा दीयते तन्नामारोपणं मयि क्रियते । अन्यस्याः कृत्वा अन्यस्यै दानं निषिद्धमिति धर्मः । वचनसंवरणं यत्नेन कर्तव्यमिति । तदुक्तम्—

रक्षितव्यं सदा वाक्यं वाक्याद्भवति नाशनम् ।
हंसाभ्यां नीयमानस्य कूर्मस्य पतनं यथा ॥

इति नीतिः । संसारिणोऽनात्मन्यात्मसंज्ञया व्यवहरन्तीति युक्तिः । विष्णुराजस्य ॥ ४५५ ॥

सहि ! साहसु सब्भावेण पुच्छिमो किं असेसमहिलाणं ।
वड्ढंति करट्ठा चिअ वलआ दइए पउत्थम्मि ॥४५६॥

---

१. अपरसस्व for अपसर P.
२. एतैः for एभिः P.
३. ०धरोत्तर० for ०धरान्तर० K.
४. यस्याः for यस्य P.
५. नियते for ह्रियते P.
६. कृत्वा for हृत्वा P.
७. 'च' is missing in P.

सखि ! कथय सद्भावेन पृच्छामः[1] किमशेषमहिलानाम् ।
वर्द्धन्ते करस्था एव वलया दयिते प्रोषिते ॥

काचिन्मुग्धाऽननुभूतप्रियविश्लेषा दुर्मनायमानाऽऽत्मनो दौर्बल्यमाकलयन्ती सखीं पृच्छति—सहि ! इति। अकृतकर्मणा कृतकर्माणो नित्यं प्रष्टव्या इति धर्मः । अज्ञा औदार्येण प्रयोजनं साधयन्तीति नीतिः। न या रक्तशिष्याः परान् पृच्छन्ति उपदेदयन्ति ते ज्ञानम् इतरदिति युक्तिः । कन्नराजस्य ॥ ४५६ ॥

भमइ परिदो विसूरइ उक्खिविउं से करं पसारेइ ।
करिणो पंकक्खुत्तस्स णेहणिअलाइआ करिणी ॥४५७॥

भ्रमति[2] परितः खिद्यते[3] उत्क्षेप्तुं तस्य करं प्रसारयति ।
करिणः पङ्कोत्क्षिप्तस्य[4] स्नेहनिगलायिता करिणी ॥

कश्चिद्विपत्पतितनायकः सघनामुदासीनां नायिकामुद्दिश्य पशुजातीयानामपि चेष्टामुपदर्शयन् आत्मनि सकरुणां करोति—भमइ इति । पङ्कोत्क्षिप्तस्य मग्नस्य करिणः उत्क्षेप्तुम् उत्क्षेपणं कर्तुं परितो भ्राम्यति क्षुभ्यति । स्नेहेन निगालयिता[6] बद्धा निकटीकृता वा । विपत्पतितस्य प्रियस्य यथासामर्थ्यं परिचर्या कार्येति धर्मः । स्वामि-विपत्तौ सेवकेन कौशलं दर्शनीयमिति नीतिः । तत्त्वज्ञानार्थमविद्यापङ्कमग्नेन पुरुषेण प्रयतनीयमिति युक्तिः । दुर्गराजस्य ॥ ४५७ ॥

धावइ पुरओ पासेसु भमइ दिट्ठीपहम्मि संठाइ ।
णवलइकरस्स तुह हलिअउत्त ! दे पहरसु वराइं ॥४५८॥

धावति पुरतः पार्श्वयोर्भ्रमति दृष्टिपथे सन्तिष्ठते ।
नवलताकरस्य तव[7] हालिकपुत्र ! दे[8] प्रहरस्व[9] वराकीम् ॥

हालिकसुतकरकृतलताताडनाभिलाषिण्याः कस्याश्चित्पुरतोऽनुरागमाकलय्य विदग्धा हालिकपुत्रमिदमाह—धावइ इति । हालिकपुत्र ! तव पुरतो धावतीत्यादि योज्यम् । प्रजहि हननं कुरु वराक्याः । नवलतयैवेत्याद्य धावनादिपरिश्रमेणाप्यभीष्टासिद्धौ खिन्न-

---

१. पृच्छामि for पृच्छामः P.
२. भ्राम्यति for भ्रमति P.
३. क्षुभ्यति for खिद्यते P.
४. पङ्कनिमग्नस्य for पङ्कोत्क्षिप्तस्य K.
५. ०निगालयिता for ०निगलायिता P.
६. निगलायिता for निगालयिता is suggested.
७ तव is missing in P.
८. हे for दे P.
९. प्रजहि for प्रहरस्व P.

वैराग्यस्य च मोक्षस्य षण्णां भग इति स्मृतिः" । तस्यैव ॥ ४६२ ॥

पेच्छ संभमविक्खित्तं रमिअव्वअलंपडाइ असईए ।
णवरंगअं कुडंगे धअं व दिण्णं अविणअस्स ॥४६३॥

पश्य सम्भ्रमविक्षिप्तं रमितव्यक[2]लम्पटयाऽसत्या ।
नवरङ्गकं निकुञ्जे ध्वजमिव दत्तमविनयस्य ॥

कयाचिदसत्या निकुञ्जे सुरतासक्तया सुरतत्वरया नवरङ्गकं निकुञ्जवृक्षोपरि क्षिप्तमपरामर्शेन तद् दृष्ट्वैकाऽपरस्याः कथयति । किं सा प्रथममागता न वेति तर्कयन्तं जारं हर्षयन्ती कुट्टनी दर्शयति वा—पेच्छ इति । संभ्रमोऽपरामर्शः । रमितव्यं सुरतं तत्र लम्पटया लुब्धया । नवरङ्गकं सिन्दूरिकावस्त्रम् । अत्रोत्प्रेक्षते—अविनयस्याकृत्यस्य दत्तं ध्वजमिव नवरङ्गकम् । अनुरागाकृष्टहृदया योषितः कुलकलङ्कमपि न गणयन्तीति भावः । ध्वजो 'न स्त्रियां तु पताकायां खट्वाङ्गे मेढ्रचिह्नयोः' इति मेदिनी[3] । उचितमार्गत्यागादेवाविनयः स च न त्याज्य इति धर्मः । सम्भ्रमेणोत्तरलतया कर्महानिर्भवतीति नीतिः । कामो विनयं जनयत्यतः कामः सर्वात्मना मुमुक्षुणा त्याज्य इति युक्तिः । शालवाहनस्य ॥ ४६३ ॥

हत्थप्फंसेण जरग्गवी वि पण्हइ दोहअगुण्णेण ।
अवलोअणपण्हुइरिं पुत्तअ ! पुण्णेहि पाविहिसि ॥४६४॥

हस्तस्पर्शेन जरद्गव्यपि प्रस्नौति दोहकगुणेन ।
अवलोकनप्रस्नवनशीलां पुत्रक ! पुण्यैः[4] प्राप्स्यसि ॥

गतवयस्कां कामयमानं कञ्चिन्नायकं दृष्ट्वा कुट्टनी स्वसुताविषये तं प्रवर्तमाना तमेवोद्दिश्य वदति । पूर्ववल्लभाया माता कञ्चिदन्यानुरक्तं नायकमन्यापदेशेनोपालभते वा—हत्थप्फंसेणेति । प्रथमाभासे स्फुटोऽभिसन्धिः । कामयमानस्यापि धर्मो विधेय इति धर्मः । कौशलेन कठिनमपि कार्यं प्रसाध्यमिति नीतिः । उपदेष्टुर्गुणेनागुणोऽपि सन्मार्गे प्रवर्तेत इति युक्तिः । रेवायाः ॥ ४६४ ॥

---

१. Cf. S'abdakalpadruma, P. 467 The full quotation is the following:—ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना ॥

२. 'क' is missing in P.

३. P. 40. V. 11.

४. पुण्येन for पुण्यैः P.

मसिणं चंक्रम्मंती पए-पए कुणइ कीस मुहभंगं ।
णूणं से मेहलिआ जहणगअं छिवइ णहवंतिं ॥४६५॥

मसृणं चङ्क्रम्यमाणा पदेपदे करोति किमिति[1] मुखभङ्गम् ।
नूनं तस्या[2] मेखलिका जघनगतां स्पृशति[3] नखपङ्क्तिम् ॥

काञ्चिन्नायिकां गच्छन्तीं दृष्ट्वा प्रतिपदं च मुखसंकोचं कुर्वतीमाकलय्य काचिदाह—मसिणमिति । मसृणं मृदु यथा स्यादेवं चंक्रम्यमाणा कुटिलं गच्छन्ती । मुखस्य भङ्गं वक्रत्वं नखक्षतपीडावशादेव । अत्रोत्प्रेक्षते—नूनं नख-पङ्क्ति जघनगतां मेखलिका क्षुद्रा मेखला छुपति स्पृशति । मसृणोऽकर्कशे स्निग्धे[4] । निरयं कौटिल्यं गता वितिर्यङ् चंक्रम्यमाणेति । छुप स्पर्शने धातुः । सुखदुःखाभ्यां कार्याभ्यां कारणपुण्यापुण्ये अनुमातव्ये इति धर्मः । अनाकलितं रभसेन यत् क्रियते तत् पश्चात्तापं जनयतीति नीतिः । सुखहेत्वपि प्रमेयं दुःखाय भवतीति युक्तिः । तस्या एव ॥ ४६५ ॥

संवाहणसुहरसतोसिएण देंतेण तुह करे लक्खं ।
चलणेण विक्कमाइच्चचरिअं अणुसिक्खिअं तिस्सा ॥४६६॥

संवाहनसुखरसतोषितेन ददता तव करे लाक्षाम् (लक्षम्) ।
चरणेन विक्रमादित्यचरितमनुशिक्षितं[5] तस्याः ॥

द्वितलसुरतकरणात्करसङ्क्रान्तलाक्षारसं प्रियमालक्ष्य खण्डिता नायिका प्रियं सहासोपालम्भमाह—संवाहणेति । तस्याश्चरणेन विक्रमादित्यस्य साहसाङ्कस्य चरितम् अनुवर्तितं सदृशं कृतम् । संवाहना परिचर्या मर्दनादिस्तया य सुखरसस्तेन तोषितेन तव करे लाक्षामलक्तकं ददता चरणेन । विक्रमादित्योऽपि सेवापरितुष्टः सेवकस्य करे लक्षसंख्याकं धनं दत्तवानिति । तेन समं शाब्दं साम्यम् । 'संवाहनं वाहने स्यादङ्गारादेश्चाङ्गमर्दने' मेदिनी[6] । भित्तिगप्रियकरस्थसुन्दरीपादयोर्द्वितलसंज्ञाकं रतं मतमिति भरते ।

कुतश्चिदागतो यस्या उचिते वासके प्रियः ।
तदनागमसन्तप्ता खण्डिता सा मता यथा ॥

इति । सन्तुष्टेन यद्दीयते तदेव परं पुण्यदमिति धर्मः । इङ्गितदर्शनेन निपुणाः सकलं कार्यमुत्सहन्त इति नीतिः । संवाहनादिना गुरूरुपचरणीय इति युक्तिः । पादवशवर्तिन ॥ ४६६ ॥

---

१. कीदृक् for किमिति P.
२. अस्या for तस्या P.
३. छुपति for स्पृशति P.
४. Medini P 66. V. 70.
५. ०वर्तितं for ०शिक्षितं P.
६. Medini P. 132 V. 219.

निभेन व्याजेन । प्रग्रिवत्वमेव शनैस्त्वे हेतुः । मदनः स्मरवसन्तद्रु ०भिद्तुरसिस्थके—मेदिनी[१]। पटश्चित्रादे वस्त्रे—मेदिनी[२]। पङ्कः पेयापापयो प्रथादीनां च वन्धने—मेदिनी[३]। अन्यापदेशेनापि सन्तः सत्कर्माचरन्तीति धर्मः। कुशलारम्भेनापि अकार्यमुद्दरन्तीति नीतिः। स्त्रियो नानाविधैरुपचारैर्विमोहन्तीति दूरतस्ता मुमुक्षुणा त्याज्या इति युक्तिः। घुल्लोतस्य ॥ ४६० ॥

रइविरमलज्जिआओ अप्पत्तणिअंसणाउ सहसत्ति ।
ढक्कंति पिअअमालिंगणेण जहणं कुलवहूओ ॥४६१॥

रतिविरामलज्जिता अप्राप्तनिवसनाः सहसेति ।
आच्छादयन्ति[५] प्रियतमालिङ्गनेन जघनं कुलवध्वः ॥

रतिसमये अपहृतवसनाः कुलस्त्रियो रतिविरामे सति लज्जावशात् प्रियालिङ्गनेन जघनदेशमावृण्वन्तीति तत् कुर्वतीं दृष्ट्वा तत्सखी काऽपरस्याः कथयति—रइविरमेति। वनोऽप्राप्तवस्त्रा इतीव सहसा जघनमावृण्वन्ति। 'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः' इत्यमरः[६]। पत्युरपेक्षिताचरणं स्त्रीणां प्रनमिति धर्मः। निपुणा उपायेन[७] कार्यसंवरणमाचरन्तीति नीतिः। विरामे विरसा विषया इति नीतिः। तस्यैव ॥ ४६१ ॥

पाअडिअं सोहग्गं तंबाए उअह गोट्ठमज्झम्मि ।
दुट्ठवुसहस्स सिंगे अच्छिउडं कंडुअंतीए ॥४६२॥

प्रकटितं सौभाग्यं ताम्रया पश्यत[८] गोष्ठमध्ये ।
दुष्टवृषभस्य शृङ्गे अक्षिपुटं कण्डूयन्त्या[९] ॥

गोष्ठनिकटनिकुञ्जे सुरतासक्ता काचिदसती दीर्घरमणार्थं पुरुषस्यान्यचित्ततां कुर्वतीति वदति—पाअडिअमिति। ताम्रा तरुणी। गोः श्रोहाने वृषभासक्ता गौरुच्यते इति टीकान्तरे। दुष्टोऽनाक्रमणीयः, न सर्वगोसाधारण इति वा। दुष्टस्यापि पत्युरुपासना स्त्रिया कर्तव्येति धर्मः। परानुवृत्त्यापि सौभाग्यमर्जनीयमिति नीतिः। गोष्ठादौ पुण्यदेशे शोभनो गो ? ( यो ) गोमोचास्तस्य भागः सौभाग्यं प्रकटनीयमुपार्जनीयमिति युक्तिः।

---

१. ०द्रुमे for ०द्रु० Medini.
२. P. 120. V. 103.
३. P. 48 V. 20.
४. P. 46. V. 22.
५. आवृण्वन्ती for आच्छादयन्ति P.
६. II. 6 74.
७. उपमा येन for उपायेन P.
८. पश्यत is missing in P.
९. कण्डूयमानया for कण्डूयन्त्या P.

पाअवडणाण मुद्धे ! रहसबलामोडिचुंबिअव्वाणं।
दंसणमेत्तपसण्णे चुक्का सि सुहाण बहुआणं ॥ ४६७॥

पादपतनानां मुग्धे[1] ! रभसबलात्कारचुम्बितव्यानाम् ।
दर्शनमात्रप्रसन्ने[2] भ्रष्टासि[3] सुखानां बहुकानाम्[4] ॥

कृतापराधमपि प्रियमालोक्य स्वेदादिविकारमादधतीं नायिकां निन्दन्ती सखी-दमाह। मानिनी सोपदेशं सखी वा आह—पाअवडणाणेति। प्रसन्ने वा। दर्शनं प्रियं-मात्रस्य तस्य प्रसन्नया कान्तानुरोधः साधीयान् न पुनरेवं त्वरयेति भावः। सुखानां चुम्बना-दिरूपाणाम्। च्यवसे भ्रष्टा भवसि। च्युङ् गतौ। मान्यानां पादपतनं धर्मसङ्गतमिति धर्मः। अवश्यकामहेतोरदुष्टामप्राप्तिं करणीयेति नीतिः। कामादिषु सुरतान्तेषु नागरिकचन्द्र-हृष्टप्रत्युत्पन्न[5] इति युक्तिः। शालवाहनस्य ॥ कण्ठाभरणे[6] मत्सरी येनेत्यर्थको मानो-ऽयम्। अत्र मान पूजायामिति धातोः स्वार्थिकणिजन्तात् पचि च मान इति रूपम्। स हि प्रियांसमस्याः पादपतनादिपूजायां प्रयोजयतीति ॥ ४६७ ॥

हे सुभणु ! पसिअ एण्हि पुणो वि सुलहाइ रूसिअव्वाइं ।
एसा मअच्छि ! मअलंछणुज्जला गलइ छणराई ॥४६८॥

हे[7] सुतनु ! प्रसीदेदानीं पुनरपि सुलभानि रोषितव्यानि[8] ।
एषा मृगाक्षि ! मृगलाञ्छनोज्ज्वला गलति क्षणरात्रि ॥

काचिदुत्तमनायिका उत्सवदिवसे प्रियापराधं मनुपलभ्य वैरस्यमागत्य प्रिया-न्तरं प्रियस्थानमनुसरति—हे सुभणु इति। हे इति सानुनयमामन्त्रणे। रूसिअव्वं रोष। उज्ज्वला दीप्ता शृङ्गारोद्दीपिका वा। गलति विरमति। क्षण उत्सवस्तत्प्रयो-जिका रात्रिः। कष्टबोधनमिति धर्महेतु। तदुक्तम्—

काम नयति च मुग्धान् स्वर्गमस्मान्नरकं फलम्।

इति धर्मः। सुतनुनिमित्तेन दुर्लभामीष्टसिद्धिर्नोपेक्षणीयेति नीतिः। सर्वमिदं नश्यन्तीति विचिन्त्य तत्पालनाय यतनीयमिति युक्तिः। पोट्टिसस्य ॥४६८॥

---

१. 'मुग्धे' is missing in P.
२. ०प्रसवेदनशीले for ०प्रसन्ने P.
३. च्यवसे for भ्रष्टासि P.
४. बहूनाम् for बहुकानाम् P.
५. ०हृष्टिरस्पद्ने is suggested for ०हृष्टप्रत्युत्पन्ने.
६. P. 321–322.
७. हे for हे P.
८. रूसि० for रोषि० P.

आवण्णाइ कुलाइं दो च्चिअ जाणंति उण्णइं णेउं ।
गोरीअ हिअअदइओ अहवा सालाहणणरिंदो ॥४६९॥

आपन्नानि[1] कुलानि[2] द्वावेव जानीत उन्नतिं नेतुम् ।
गौर्या[3] हृदयदयितोऽथवा शालवाहननरेन्द्रः ॥

कस्यचिद्दरिद्रस्य कान्तया सहैकान्ते केन प्रकारेण दारिद्र्यापगमो भवतीति प्रस्तावे कान्तमुद्दिश्य काचिद्वदति । शालवाहननृपं महेश्वरसदृशं रूपयित्वा कश्चिद्बन्दी श्लाघते वा—आवण्णाइ इति । गौरीहृदयदयितो हरः । पक्षे आवण्णाइ आपर्णानि अपर्णा पार्वती तस्या एतानि तत्सम्बन्धीनि कुलानि हर उन्नतिं नेतुं जानाति दरिद्रा॰ णामर्थात् । आपद्गतानि शालवाहननरेन्द्र उन्नतिं नेतुं जानातीत्यन्वयः । हरशालवाहनयोः सेवां कुर्विति भावः । आपद्गतोद्धरणमतिपुण्यहेतुरिति धर्मः । फलोन्नतिर्यथा भवति तथा व्यवहर्तव्यमिति नीतिः । संसारबन्धापद्गतस्य हर एव निस्तारहेतुरिति युक्तिः । पृथ्वीनाथस्य ॥ ४६९ ॥

दुक्कंधदुरारोहं पुत्तअ ! मा पाडलिं समारुहसु ।
आरूढणिवडिआ के इमीअ ण कआ हआसाए ? ॥४७०॥

दुष्कन्धदुरारोहा पुत्रक ! मा पाटलिं समारोह ।
आरूढनिपतिताः के अनया न कृता हताशया[6] ? ॥

काचिद्धितैषिणी वेश्यासमागमात्कमपि स्नेहविषयं निषेधयन्ती वदति—दुक्कंधेति । दुष्कन्धदुरारोहा दुःखेनारोहणमुपरिगमनं यस्याः । पुनरपि अनारोहे हेतुमाह—इह ग्रामे । पुत्रक ! वत्स ! पाटलीं स्त्रियं मा समारुहस्व तत्सङ्गतो मा भव । अत्र हेतुः—दुरवस्थो यः स्कन्धो वेश्याग्राह्यः पण्यः तेन दुरारोहाऽसम्भोग्या । आरूढपतिता इह ग्रामेऽनया के न कृता इति । स्कन्धो वेश्याग्राह्यः पण्य इति टीकान्तरे । परस्त्रीगमनं निषिद्धमतस्तन्न विधेयमिति धर्मः । यत्र कर्मणि पतनयोग्यता तन्नाचरणीयमिति नीतिः । जन्तूनां जन्मनिपातादि दृष्ट्वा तत्त्वज्ञाने यतनीयमिति युक्तिः । तस्यैव ॥ ४७० ॥

गामणिघरम्मि अत्ता ! एक्क च्चिअ पाडला इहग्गामे ।
बहुपाडलं च सीसं दिअरस्स ण सुंदरं एअं ॥ ४७१॥

---

१. आपद्गतानि for आपन्नानि P.
२. P. adds द्वारे after कुलानि.
३. *गौरी॰ for गौर्या* P.
४. शालि॰ for शाल॰ K.
५. खिक्खंर for दुक्कं॰ Weber.
६. The verse is missing in P.

[1]ग्रामणिगृहे श्वश्रु ! एकैव पाटला' इह ग्रामे ।

बहुपाटलं च शीर्षं देव[2]रस्य न सुन्दरमेत[3]त् ॥

देवरस्य ग्राममुख्यमहिलाप्रसक्तिं काचित्सूचयन्ती श्वश्रूमिदमाह—ग्रामणिपरन्मीति । अनेन लिङ्गेन लोकस्तद्वनिताप्रसक्तं कलयिष्यतीति । अयं च तद्वनितायाः प्रीतिभाजनमतः सा तस्मै तत्कुसुमं ददाति । तथा न्वायं तत्र निवार्यतामिति भावः । बहिर्माल्यधारणमनाचर इति धर्मः । अदृष्टमश्रुतमप्यर्थमज्ञा लिङ्गेनोन्नयन्तीति नीतिः । सुगन्धिपुष्पादिधारणं चित्ता[4]न्माथकमतस्तन्निवारणीयमिति युक्तिः ॥ ४७१ ॥

अण्णाण वि होंति मुहे पम्हलधवलाइ दीहकसणाइ ।

णअणाइ सुंदरीणं तह वि हु दट्ठुं ण आणंति ॥ ४७२ ॥

अन्यासामपि भवन्ति मुखे पक्ष्मल[5]धवलानि दीर्घकृष्णानि ।

नयनानि सुन्दरीणां तथापि खलु द्रष्टुं न जानन्ति[6] ॥

कश्चित्कामी कामिनीनेत्रविभ्रमाकृष्टचित्तस्तां प्रशंसन् वदति-अण्णाण वीति । अन्यासां सामान्यानां सुन्दरीणां पक्ष्मलानि पक्ष्माणि रोम तदत्रास्ति तत् पक्ष्मलम् । तारुण्यमिदं स्त्रियाः । तथा चेयं विकटायितविलोकितं जानातीति भावः । सत्यपि द्रव्ये दानादिविनियोगं कोऽपि जानातीति धर्मः । द्रव्यविनियोगः सत्पथेन कर्तव्य इति नीतिः । विशिष्टलोचनानां तत्त्वसाक्षात्कारो न जायते किन्तु तत्त्वज्ञानिनामिति युक्तिः । युक्तेतस्य ॥ ४७२ ॥

हंसेहि व तुह रणजलअसमअभअचलिअविहलवक्खेहिं ।

परिसेसिअपोम्मासेहि माणसं गम्मइ रिऊहिं ॥ ४७३ ॥

हंसैरिव तव रणा[7]जलदसमयभयचलितविह्वलपक्षैः ।

परिशेषितपद्माशैर्मानसं गम्यते रिपुभिः ॥

---

१. P reads ग्रामप्रधानगृहे हे श्वश्रूः एक एव पाटलावृन्ते for ग्रामणिगृहे श्वश्रु ! एकैव पाटला.

२. र is missing in P.

३. इदम् for एतत् P.

४. चित्तोन्माथक० for चित्तान्माथक० is suggested.

५. 'ल' is missing in P.

६. न जानन्ति द्रष्टुम् for द्रष्टुं न जानन्ति P.

७. रणा० for रणा० P.

युद्धप्रवीरं निजशत्रुं वन्दी विदूरत्वा ? ( विद्वत्तया ) वर्णयति—हंसेहि इति । तव रिपुभिर्भयादर्थात् तव मानसं चित्तं गम्यते सावष्टम्भं क्रियते । परिशेपिता त्यक्ता पद्मा लक्ष्मीस्तस्या आशा यैस्तै रिपुभिः । तव रमया एवं जलदसमयस्तस्माद् भयेन चलिताः पलायिता विकलाः पद्मा अनुकूलाः सैन्यादयो येषां तैः । यथा हंसैर्गम्यते तथेत्यर्थः । रयाः शब्दो जलदसमयस्तस्माद्भयेन चलिता विह्वलाश्च पद्मा येषां तैः । पद्मं कमलम् । प्रोषितपतिका काचिदुपस्थितं वर्षासमयमुद्दिश्य वक्ति । हंसैर्निर्लोभैर्धार्मिकैः परिशेपिता विरलीकृता पद्मायां लक्ष्म्यामाशा यैः । मानसं चित्तमर्थात् परेषामवगाह्यत इति धर्मः । येषां रिपवो गाथोक्तार्थविषया भवन्ति त एव परं राजश्रियमुपभुञ्जत इति नीतिः । हंसैर्योगिभिः परिशेपिता त्यक्ता पद्माया आशा यैस्तैर्मानसं सरस्तीर्थभेदस्तत्र गम्यत इति युक्तिः । 'हंसो मानसौकसि । निर्लोभनृपविष्ण्वर्के परमात्मनि मत्सरे । योगिभेदे' इति मेदिनी[3] ? तस्यैव ॥ ४७३ ॥

दुग्गअघरम्मि घरिणी रक्खंती आउलत्तणं पइणो
पुच्छिअदोहलसद्धा पुणो वि उअअं विअ कहेइ ॥ ४७४ ॥

दुर्गतगृहे गृहिणी रक्षन्ती आकुलत्वं[4] पत्युः ।
पृष्टदोहदश्रद्धा पुनरप्युदकमेव[5] कथयति ॥

सगर्भदरिद्रवधूर्दोहदाय पृष्टा सा च जलमेव याचत इति काप्याह-दुग्गअघरम्मीति । कस्मिन्दोहदे तवाभिलाप इति पृष्टा दोहदे श्रद्धा यस्याः साऽनुबध्यमानापि पुनः पुनरुदकमेव कथयति । अन्योऽन्यानुरागो दानादिसमीहां करोतीति भावः । एकान्तपतिव्रता पत्युराकुलत्वं न सहत इति धर्मः । यद्वा गुर्विण्यै दोहदमवश्यं देयम्, अन्यथा गर्भवैकल्यं स्यादिति धर्म एव । अनुकूलाः स्वामिनोऽनाकुलत्वमेव चिन्तयन्तीति नीतिः । योगिनश्च ये सन्तोषशीलास्ते उदकेनापि तुष्यन्तीति युक्तिः । मुकुन्दस्य ॥ ४७४ ॥

आअंबलोअणाणं ओल्लंसुअपाअडोरुजहणाणं ।
अवरण्हमज्जिरीणं कए ण कामो वहइ चावं ॥४७५॥

आताम्रलोचनानामार्द्रांशुकप्रकटोरुजघनानाम्[6] ।
अपराह्णमज्जनशीलानां कृते न कामो वहति चापम्[7] ॥

---

१. P. repeats लक्ष्मी.
२. P. repeats रमया एव.
३. P. 233. V. 12-13. Medini adds स्यात् after हंसो.
४ अनाकुलत्वम् for आकुलत्वम् P.
५. ०रप्युदंकमे for ०रप्युदकमेव P.
६. ०प्रकटितोरु० for ०प्रकटोरु० P.
७. धनुः for चापम् P.

अपरंतरह्मज्जनशीलाः कामिनीः साभिलाषमालोकमानः कश्चिदिदमाह—आर्यवत्योऽगाधायां इति । आर्द्रैर्यांशुकेन वस्त्रेण प्रकटितमूरु जघनं यासाम्, एतादृशीनां कृते कामो धनुर्वहतीत्यन्वयः । स्वत एवैना लोकानां मन उन्मथ्नन्तीति मदनुःकार्यं च कुर्वन्ति । अतस्ता सुधनुर्वहन्तीति । यास्तु स्वयं न मोदयन्ति तासामेव कृते लोकान्मादयितुं धनुर्वहतीति भावः । मज्जनं चानेकगुणावहुकम्—

गुणा दश स्नानपरस्य जन्तो रूपं च दृष्टिश्च बलं च तेजः ।
आयुष्यमारोग्यमलोलुपत्वं दुःस्वप्ननाशश्च बलं च तेजः[1] ॥

इत्यङ्गानां वैशिष्ट्यात् स्वामिन उद्युक्ता भवन्ति, मध्य स्नानादिसाम्यमिति नीतिः कामिन्य एतादृश्यश्च मानसमादरन्तीति ता वर्जनीया इति युक्तिः । कण्ठाभरणे[2] उद्दीपनविभावेषु मार्घ्यादिस्नानमिदम् । अनङ्गकस्य ॥ ४७५ ॥

के उव्वरिओ ? के इह ण खंडिआ ? के ण लुत्तगुरुविहवा ?
णहराइ वेसिणीओ गणणारेहाउ व वहंति ॥ ४७६ ॥

के उर्वरिताः ?[3] के इह[5] न खण्डिताः ? के न लुप्तगुरुविभवाः ?
नखराणि वेश्या[6] गणनारेखा इव वहन्ति ॥

वारविलासिनीनां देहनखरेखां दृष्ट्वा कश्चित्सरागं वक्ति—के उवरिआ इति । नखपदानि रेखा इवेति वा । खण्डितेभ्यो लुप्तगुरुविभवेभ्यः के उद्धृता[4] बहिर्भूता अपि तु न केऽपि । मया च सर्व एव एवंकृता इति भावः । अर्थादमीषां गाथापूर्वार्द्धोक्तानां गणनार्थं रेखा इव नखपदानि वेश्या वहन्तीवेत्युत्प्रेक्षा । वेश्याभिलाषान्निवारयितुं कश्चिद्धितैषी वयस्यं वदति वा । वेश्याः श्मशानसुमना इव वर्जनीया इति धर्मः । विशिष्टगुणयुक्ताः सर्वानेव व्यामोहयन्तीति नीतिः । सन्निहिताश्च नार्यो मदयन्तीति शुभगुणा वरस्मात्स्त्याज्य इति युक्तिः । गुणाढ्यस्य ॥ ४७६ ॥

विरहेण मंदरेण व हिअअं दुद्धोअहिं व महिऊण ।
उम्मूलिआइ अव्वो अम्हं रअणाइ व सुहाइं ॥ ४७७ ॥

---

१. 'बलं च तेजः' occurs twice in this verse which is obviously wrong.

२. P. 305.

३. उवरिआ P.

४. उद्धृताः P.

५. P. adds ज्ञाति after इह

६. वेश्यागणनानां for वेश्या गणना० P.

विरहेण[1] मन्दरेणेव हृदयं दुग्धोदधिमिव मथित्वा ।
उन्मूलितानि[2] कष्टमस्माकं रत्नानीव सुखानि ॥

काचिद्विरहिणी प्रियानयनाय त्वरयन्ती स्वावस्थां वर्णयन्ती सखीमिदमाह — विरहेणेति । हृदयं मथित्वा विरहेण अस्माकं सुखान्युन्मूलितानीत्यन्वयः । यथा मन्दरेण दुग्धोदधिं मथित्वा रत्नान्युन्मूलितानि तथेत्यर्थः । अयो[3] दुःखसूचने । निष्पापत्वेन शुक्लत्वेन हृदयदुग्धोदध्योः साधर्म्यम् । भर्तुरसंसर्गे सतीनां विशिष्टभोजनाद्यपि न सुखायेति धर्मः । कुशलाश्च विमृश्य सारमुद्धरन्तीति नीतिः । संसारिणां निष्परिपन्थीनि सुखानि न सम्भवन्तीति युक्तिः । अनेकेवेयमुपमा । शालवाहनस्य ॥ ४७७ ॥

उज्जुअरए ण तूसइ वंकम्मि वि आअमं विअप्पेइ ।
एत्थ अहव्वाइ मए पिए पिअं कह णु काअव्वं ॥ ४७८ ॥

ऋजुरते न तुष्यति वक्रेऽप्यागमं[4] विकल्पयति ।
अत्राभव्यया मया प्रिये प्रियं कथं नु कर्तव्यम् ॥

काचित्कुलस्त्री व्युत्पन्ना चतुरा सुरतेनापरितुष्टाऽऽत्मानमेवोपालभते — उज्जुअरए णेति । ऋजुकेन वक्रोक्तिव्यतिक्रमेण तुष्यति प्रिये विकारिणीं विसम्बद्धां विकल्पयति प्रिये मयाभव्यया कथं नु प्रियं कर्तव्यमित्यन्वयः । नु प्रश्ने कर्तव्यमेवेत्यर्थः । ऋजुनैव व्यवहारेण धर्मोपचय इति धर्मः । दुर्विदग्धः सर्वथा रञ्जयितुमशक्यः । तदुक्तम् —

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रञ्जयति ॥

(इति[5] नीतिः[5]) मुमुक्षुणा संसारानपेक्षेण व्यवहरणीयमिति युक्तिः । अन्यलभ्याः ॥४७८॥

बहुविहविलासरसिए सुरए महिलाण को उवज्झाओ ?
सिक्खइ असिक्खिआइ वि सव्वो णेहाणुबंधेण ॥ ४७९ ॥

बहुविधविलासरसिके[6] सुरते[7] महिलानां क उपाध्यायः ?
शिक्ष्यते[8] अशिक्षितान्यपि सर्वः स्नेहानुबन्धेन ॥

---

१. P. adds इव after विरहेण.
२ अन्यथो for उन्मूलितानि कष्टम् P.
३. अज्ञो for अयो P
४. ०ऽधिकारिणी for ०प्यागमम् P.
५. Supplied by the Editor.
६. ०भृते for ०रसिके P.
७. सुरते is missing in P.
८. शिक्षिते for शिक्ष्यते P.
९. P. adds खलु before सर्वः.

कयाचित्कापि पृष्टा स्त्रीणां सुरते क उपदेष्टेति सा तां वदति—बहुविहेति। भूते पूर्वो। महिलानां स्त्रीणाम्। अत्र हेतुमाह—खलु निश्चये स्नेहस्यानुबन्धेन सम्बन्धेनाशिक्षितान्यपि सर्वः शिक्ष्यते उपदिश्यते। अत्र च स्वाभाविक एव स्नेह उपदेष्टेति भावः। सुरतवैदग्ध्यात् पत्युरात्मनो बहुचारिणीत्वशङ्कानिरासार्थमात्मनोऽनुरागं च सूचयन्ती कापीदमाह। धर्माधर्मयोरुपदेष्टाऽन्यो न भवति किन्तु जन्मान्तरीय एवाभ्यासस्तद्धेतुरिति धर्मः। तात्पर्यविशुद्ध्यैव धीमन्तः सकलमर्थं जानन्तीति नीतिः। बहुधाप्युपदेशविस्मर्तारं शिष्यमुपाध्याय आहेति युक्तिः। कहिलस्य ॥ ४७९ ॥

वण्णवसिए विअत्थसि सच्चं चिअ सो तुए ण संभविओ।
ण हु होंति तम्मि दिट्ठे सुत्थावत्थाइ अंगाइं ॥ ४८० ॥

वर्णवशिते[1] विकत्थसे सत्यमेव न त्वया न सम्भावितः[2]।
न खलु भवन्ति तस्मिन् दृष्टे[3] स्वस्थावस्थान्यङ्गानि[4] ॥

सखि! तव नयनानन्दकरः प्रियंगुश्यामः प्रियतमो मयाद्य दृष्ट इति वदन्तीं सखीं कापि सानुरागमिदमाह—वण्णवसिए इति। मया न दृष्ट इत्येव विकत्थसे आत्मश्लाघां करोषीति तात्पर्यम्। अदर्शने हेतुमाह—न खल्वित्यादि। वर्णमात्रे तव स्पृहा भूता न तेन सममालापादिरभूदिति भावः। आरण्यरसिके वर्त्तस इत्येवं कापि, न चासाधीयानिवावभाति। परेषां गुणदोषविकत्थना न कार्येति धर्मः। असति कार्ये कारणवैयर्थ्यं कल्पनीयमिति नीतिः। विषयपरवशो मनागपि न स्वस्थायते इति युक्तिः। वराहस्य ॥ ४८० ॥

आसण्णविवाहदिणे अहिणववहुसंगमुस्सुअमणस्स।
पढमघरिणीअ सुरअं वरस्स हिअए ण संठाइ ॥४८१॥

आसन्नविवाहदिने अभि[5]नववधूसङ्गमोत्सुकमनसः।
प्रथमगृहिण्याः सुरतं वरस्य हृदये न सन्तिष्ठते ॥

सन्निकृष्टविवाहस्य कस्यचित् प्रथमवधूरतं न हृदयङ्गमं भवतीत्येकाऽपरस्याः कथयति। यथानुपभुक्ता कान्ता समुत्कण्ठयति न तथोपभुक्तेति कोऽपि सखायमाह वा—आसन्नेति। अधिविन्नायामिदं न विधेयमिति धर्मः। 'कृतसापत्निकाऽध्यूढाऽधिविन्नाथ स्वयंवरा, इत्यमरः[6]। स्वरूपमज्ञात्वान्यस्मिन् प्रीतिं विधाय पूर्वस्मिन् प्रीतिभाजनेऽव-

---

१. ०वशीकृते for ०वशिते P.
२. दृष्ट० for सम्भावितः P.
३. P. adds न before दृष्टे.
४. सुस्था० for स्वस्था० P.
५ अभि is missing in P.
६. II. 6. 7.

धीरया न कर्तव्येति नीतिः। मुमुक्षवः कृतमपि विषयोपभोगमकृतमेव मन्यन्त इति युक्तिः। सेनेन्द्रस्य ॥ ४८१ ॥

जइ लोकणिंदिअं जइ अमंगलं जइ विमुक्कमज्जाअं।
पुप्फवइदंसणं तह वि देइ हिअअस्स णिव्वाणं ॥४८२॥

यदि[1] लोकनिन्दितं [2]यद्यमङ्गलं [3]यदि [4]विमुक्तमर्यादम्।
पुष्पवतीदर्शनं तथापि ददाति हृदयस्य निर्वाणम् ॥

अविहितेऽपि दिने प्रेयसीसमागमो...लोकः प्रेयस्या वा निरतो वदति—जइ इति। भिन्ना त्यक्ता मर्यादा धार्मिकाणां येन तद्दर्शनम्। पुष्पवती रजस्वला। निर्वाणं सुखम्। यश्च यत्रानुरक्तः स पापेऽपि न निवर्तते। तदुक्तम्—

जाने तपसो वीर्यं सा बाला परवतीति मे विदितम्।
नच निम्नादिव सलिलं निवर्तते मे ततो हृदयम् ॥[5]

अस्यां च दृढसौहृदं कान्त आह। ऋतुदर्शनादि पापजनकमिति धर्मः। पापीयसा सममतिप्रसङ्गो न विधेय इति नीतिः। अकृत्येऽपि मनश्चलते, तेन तन्नियमयेदिति युक्तिः। निःसहस्य ॥ ४८२ ॥

ण वि तह अइगरुएण वि तम्मइ हिअए भरेण गब्भस्स।
जह विवरीअणिहुअणं पिअम्मि सोण्हा अपावंती ॥४८३॥

नापि तथाति[6]गुरुकेणापि ताम्यति हृदये[7] भरेण[7] गर्भस्य।
यथा विपरीतनिधुवनं प्रिये स्नुषाऽप्राप्नुवती ॥

इयं गर्भभारेणातिक्लिष्टेति वदन्तीं काञ्चित् परिहासिनीं रतितन्त्रपण्डितात्वमात्मन सूचयन्ती कापीदमाह—ण वि तहेति। अप्राप्नुवन्ती ताम्यतीत्यत्राप्यन्वेत्यावृत्त्या। गर्भवती ऋतुमती। स्त्रीणादीनां धर्मशास्त्रे कामशास्त्रे च रतिनिषेध इति धर्मः। आत्मीयेनापि क्लेशेन प्रभोराराधनं विधेयमिति नीतिः। गर्भादिक्लेशं विचिन्त्य संसारबन्धच्छिदायै यतनीयमिति युक्तिः। तस्यैव ॥ ४८३ ॥

अगणिअजणाववाअं अवहत्थिअगुरुअणं वराईए।
तुह गलिअदंसणासाइ वलिउं चिरं रुण्णं ॥ ४८४ ॥

---

१. यद्यपि for यदि P.
२. यदि वा for यदि P.
३. यद्यपि for यदि P.
४. भिन्न॰ for विमुक्त॰ P.
५. Abhi. Sāk. III.2.
६. ति is missing in P.
७. हृदयभारेण for हृदये भरेण P.

अगणितजनापवादमपहस्तितगुरुजनं वराकया ।
तव[1] गलितदर्शनाशया वलितं चिरं रुदितम् ॥

महतापि श्रमेणालब्धदर्शनायाः कस्याश्चिदनुरागातिशयं वैक्लव्यं च प्रतिपादयन्ती दूती नायकमाह—अगणिअ इति । आद्यमुभयं वाक्यं क्रियाविशेषणम् । गलितया-ऽपयातया । वलितुं गन्तुं, वलवदधिकमिति वा क्रियाविशेषणम् । वलित्वा गत्वेति वा । अनुरागाकृष्टहृदया गुरुजनमपि नापेक्षन्त इति रहस्यम् । जनापवादो गुरोस्तिरस्कारश्च वारणीय इति धर्मः । आशाभङ्गो न कर्तव्य इति नीतिः । रोदनादिकष्टं दृष्ट्वा संसारे विरक्तेन भवितव्यमिति युक्तिः । हरिराजस्य ॥ ४८४ ॥

हिअअं हिअए णिहिअं चित्तालिहिअ व्व तुह मुहे दिट्ठी ।
आलिंगणरहिआइं णवरं खिज्जंति अंगाइं ॥ ४८५ ॥

हृदयं हृदये निहितं चित्रालिखितेव तव मुखे दृष्टिः ।
आलिङ्गनरहितानि[3] केवलं क्षीयन्तेऽङ्गानि ॥

कमनीयनायकस्य लब्धदर्शनसुखालिङ्गनादिकमभिलपन्ती काचित्सन्दिशति—हिअअमिति । निहितमारोपितं हृदये तव । चित्रे लिखितं यथान्यत्र न याति तया दृष्टिस्तव मुखे स्थिता । अपरशरीरायां सम्बन्धरहितानामालिङ्गनदुः[4]स्थितमवस्थानमतस्तानि क्षीयन्ते कृशानि जायन्ते । खिज्जन्तीति पाठे शीर्यन्त इत्यर्थः । महानुभावा यथाभिज्ञपितसम्पादनेन अर्थिजनं तोषयन्तीति धर्मः । परेषां हृदयसन्तोषः कर्तव्य इति नीतिः । सांसारिकीं दुरवस्थामालोक्य मुक्तौ यतनीयमिति युक्तिः । अस्यां गाथायां पूर्वगाथार्थावसानमिति । विदग्धस्य ॥ ४८५ ॥

अहअं विओअतणुई दुसहो विरहाणलो चलं जीअं ।
अप्पाहिज्जउ किं सहि ! जाणासि तं चेअ जं जुत्तं ॥ ४८६ ॥

अहं वियोगतन्वी दुस्सहो विरहानलश्चलं[5] जीवम्[5] ।
अभिधीयतां[6] किं सखि ! जानासि त्वमेव यद्युक्तम्[7] ॥

१. तद० for तव P.
२. खि० for खि० Weber.
३. ०दुःस्थितानि for ०रहितानि P.
४. P. reads नैदं for दुः०.
५. चलो जीवः for चलं जीवम् P.
६. सन्दिश्यताम् for अभिधीयताम् P.
७. वयस्य for यद्युक्तम् P.

दशामीमवस्थां गन्तुर्दुस्सहमपि किं त्वया प्रियस्य सन्देष्टव्यमिति सख्या भणिता सा तामाह—अइअमिति। प्रार्थनाभङ्गभयेन स्वामवस्थामेव निवेदयन्ती न पुनरात्माभिलाषं प्रकाशते इति त्वमेव युक्तं वदेरिति तात्पर्यम्। सन्त आपद्गतस्य विमृश्य स्वयमेव निस्तारं चरन्तीति धर्मः। निसृष्टार्थदूते कार्यमात्रोद्देशे कृते तत्साधनोपायं स एव जानातीति नीतिः। जीवादीनामनित्यतां प्रतिपादयन् कश्चिच्छिष्यं बोधयतीति युक्तिः। अज्ञयस्य ॥ ४८६ ॥

तुह विरहुज्जागरओ सिविणे वि ण देइ दंसणसुहाइं।

बाहेण पहालोअणविणोअणं से हअं तं पि ॥ ४८७ ॥

तव विरहोज्जागरकः[1] स्वप्नेऽपि न ददाति दर्शनसुखानि।

बाष्पेण पथालोकनविनोदनं तस्या[3] हृतं तदपि[4] ॥

कस्य कृते कस्याश्चिन्नायिकायाः सखीदूती अनुरागातिशयं निवेदयति—तुह इति। उज्जागरणं कर्तृ स्वप्नेऽपि दर्शनसुखानि न ददाति जागरणे स्वप्नाभावात्। एवं येन पथा त्वमवलोक्यसे तत्पथालोकनेन यद्विनोदनं सुखं तदस्यास्त्वयि बाष्पेण हृतं दूरीकृतमित्यन्वय। कलहान्तरितेयम्। क्रोधपरायां सर्वप्रकारेण हानिर्भवतीति। तदुक्तम्—'यशसस्तपसश्चैव क्रोधो नाशकरः परः' इति ॥ रोषाद्विधेयमप्यवधीर्य दुःखमनुभवन्तीति नीतिः। स्वप्नसुखवज्जागरणसुखं ज्ञानिनो भावयन्तीति युक्तिः। महादेवस्य॥४८७॥

अण्णावराहकुविओ जह तह कालेण गच्छइ पसाअं।

वेसत्तणावराहे कुविअं कह तं पसाइस्सं[5] ॥ ४८८ ॥

अन्यापराधकुपितो[6] यथातथा कालेन गच्छति प्रसादम्।

द्वेष्यत्वापराधे[7] कुपितं कथं त्वा प्रसादयिष्यामि ॥

काचित् पुरुषान्तरप्रसङ्गेन कृतापराधाऽनुरक्तं नायकमनुकूलयन्ती सोपालम्भं स्वयमेव विमृश्य वदति—अण्णावराहेति। अन्यः साधारणः। अहं तव द्वेष्येति बद्धमूलापराधेन कुपितम्। 'अनुरक्तं न विरागयेत्' इति धर्मः। निपुणमतयो यत्र कार्यसिद्धिं नाकलयन्ति तत्रोद्यमं न कुर्वन्तीति नीतिः। कृतापराधेऽपि क्षमाशीला मुक्तिभाजो भवन्तीति युक्तिः। वनगजस्य ॥ ४८८ ॥

---

१ दुःख० *for* दुस्सह० P.

२. विरहे उज्जागरणं for विरहोज्जागरक. P.

३. अस्या for तस्या P.

४. त्वयि for तदपि P.

५ पसापमि for पसाइस्सं W.

६ ० प्रकुपितो for ० कुपितो P.

७. ० पराध० for ० पराधे P.

दीससि पिआइ जंपसि सब्भावो सुहअ ! एत्तिओ चेअ।
फालेऊण हिअअं साहसु को दावए कस्स ॥ ४८९ ॥

दृश्यसे[1] प्रियाणि जल्पसि सद्भावः सुभग ! एतावानेव।
पाटयित्वा हृदयं कथय को दर्शयति[2] कस्य ॥

काचिद् हृदयविसंवादिनं नायकमुपालभते। विमनस्कनायकस्य प्रबोधं कुर्वती वा काचिद्वदति–दीससीति। अपि तु न कोऽपीति शेषः। तव च बाह्योपचारेण दृष्टिताऽहं, न पुनस्तव दुष्टाशयत्वं ज्ञातमिति भावः। प्रियमेव सर्वदा वक्तव्यम्, तदुक्तम्—'सत्यमप्यहितं यस्माद्' इत्यादि। अविसंवादेन व्यवहारः प्रवर्तनीय इति नीतिः। प्रज्ञाद्वैतानन्दरसो वा न शक्यते विभावयितुमिति युक्तिः। राघवस्य ॥ ४८६ ॥

उअअं लद्धिऊ उत्ताणिआणणा होंति के वि सविसेसं।
रित्ता णवंति सुइरं रहट्टघडिअ व्व कापुरिसा ॥४९०॥

उदकं लब्ध्वोत्तानिताननाः[3] भवन्ति केऽपि सविशेषम्।
रिक्ता नमन्ति सुचिरं रहट्टघटिका इव कापुरुषाः ॥

काचिदुत्तमा विलासिनी सधनेन दमेन पुरुषेण सङ्गता सदयगौरवेणोपलक्षा भङ्गीभणित्या निन्दन्ती तमेवान्यापदेशेन वक्ति—उअअमिति।[4] 'उदयमुपचयम्। उत्तानमाननं येषां तादृशा भवन्ति। रिक्ताः सन्तः सुचिरं नमन्ति केऽपि कापुरुषाः। यथा रहट्टघटिका उदकं लब्ध्वा उत्तानानना भवन्ति रिक्ताश्च नमन्ति तथेत्यर्थः। सत्पुरुषाश्च नता भवन्तीति धर्मः। नतिः कर्तव्येति नीतिः। संसारावधीरणापरेण योगिना भवितव्यमिति युक्तिः। हस्यैव ॥ ४६० ॥

भमणपिअसंगमं केत्तिअं व जोण्हाजलं णहसरम्मि।
चंदअरपणालणिज्झरणिवहपडंतं ण णिट्ठाइ ॥ ४९१ ॥

भ्रमप्रियसङ्गमं कियदिव[5] ज्योत्स्नाजलं नभःसरसि।
चन्द्रकरप्रणाल[6]निर्झरनिवहपतत्[7] निस्तिष्ठति[8] ॥

१. दृश्यसे is missing in P.
२. दर्शयते for दर्शयति P.
३. उत्तानानना for उत्तानितानना P.
४. P. reads उदयम् for उदकम् in the commentary and paraphrases it as उपचयम्.
५. कियदेव for कियदिव P.
६. ० प्रवाह for प्रणाल P.
७. एव वलन for ०निवहपतत् P.
८. निविष्टति for निस्तिष्ठति P.

काचिदप्रप्रियसमागमा सन्तप्यमाना कामपि सखीं लक्ष्यीकृत्य वदति। अन्धकाराभिसारिका कापि ज्योत्स्नाद्वेषाद्दूती सनिर्वेदमाह—भग्नेति। भग्न प्रियसङ्गमो येन तत्। ज्योत्स्नैव जलं कर्तृ। नभ एव सरस्तत्र। न निर्विष्टति निष्ठां समाप्तिं न गच्छति किन्तूपचीयत इत्येव। चन्द्रस्य कर एव प्रणालस्तस्मान्निर्झरनिवहेन वलत् पतत् ज्योत्स्नाजलम्। निर्यातीति पाठे नाशं न यातीत्यर्थः। स्वकार्यपराः पापीयांस उपकारिणं द्विषन्तीति धर्मः। सति स्वकार्यविरोधेऽनुकूलिनमपि नीतिमन्त परिहरन्तीति नीतिः। तत्त्वज्ञानेनाप्यविद्याप्रपञ्चजनितो मोहो नाशयितुमशक्य इति युक्तिः। दूरमानस्य ॥४९१॥

सुंदरजुआणजणसंकुले वि तुह दंसणं विमग्गंती।
रण्णे व्व भमइ दिट्ठी वराइआए समुव्विग्गा ॥ ४९२ ॥

सुन्दरयुवजनसङ्कुलेपि तव दर्शनं [1]विमार्गयन्ती।
अरण्य इव भ्रमति दृष्टिर्वराकिकायाः [3]समुद्विग्ना ॥

कान्ते कस्या अपि तद्दर्शनसतृष्णाया अनुरागातिशयं निवेदयन्ती सखी वदति-सुंदरेति। विशेषतो मार्गयन्ती अनुसन्दधाना। अरण्ये निर्मानुष इव। वराकिकाया दीनायाः। अनुद्विग्ना स्वद्दर्शनप्रत्याशयाऽवस्थाऽविदितखेदा। 'ओविजी भयचलनयोः' इति धातुः। धार्मिका अधार्मिककुलेऽपि धर्मैकदृष्टयो भवन्तीति धर्मः। स्वेष्टसिद्धये कृतोद्यमा अनायासं न गणयन्तीति नीतिः। अन्तःप्रमोदयुक्तानां दृष्टिश्च शून्यैव भ्रमतीति युक्तिः। विरहविलासस्य ॥ ४९२ ॥

जइ ण छिवसि पुप्फवइं पुरओ ता कीस वारिओ ठासि।
छित्तो सि चुलचुलंतेहि धाविऊण अम्ह हत्थेहि ॥४९३॥

यदि न स्पृशसि पुष्पवतीं पुरतस्तत्किमिति[4] वारितस्तिष्ठसि।
स्पृष्टोसि चुलचुलायमानैर्धावित्वाऽस्माकं हस्तैः[5] ॥

पुष्पवत्याः स्पर्शे वारितोऽपि प्रियो हस्तौ च प्रसार्य स्वयं स्पृष्टः समुद्विग्नस्तया भर्त्रे न कृतमिति वदन्तं तमेव काचिद्वदति—जइ इति। चुरचुरायमाणाभ्यां स्पर्शकण्डूयुक्ताभ्यां हस्ताभ्यां स्पृष्टोसि न मयेति शेषः। धावित्वा गत्वा। निषिद्धं दूरत एव परि-

१. युव is missing in P.
२ वि is missing in P.
३. अनु० for समु०
४. इति is missing in P.
५. चुरचुरायमाणाभ्याम् for चुलचुलायमानैः P.
६. ०स्मद्धस्ताभ्याम् for ०स्माकं हस्तैः P.

त्तैव्यमिति धर्मः । अकार्ये निवारितो यो न तिष्ठति सोऽसत्फलं भुनक्तीति नीतिः । निपेव्यमाणो मारोऽधिकाधिकामाकाङ्क्षां जनयतीति योगिना परिहर्तव्यः स इति युक्तिः । प्रवरसेनस्य ॥ ४९३ ॥

उज्जागरअकसाइअगुरुअच्छी मोहमंडणविलक्खा ।
लज्जइ लज्जालुइणी सा सुहअ ! सहीण वि वराई ॥४९४॥

उज्जागरकषायितगुरुकाक्षी मोघमण्डनविलक्षा ।
लज्जते लज्जाशीला[२] सा सुभग ! सखीभ्योऽपि[३] वराकी ॥

कृतमण्डनायाः कान्तागमनमाकाङ्क्षन्त्याः प्रियो नागत इति खण्डिताया अवस्थां दूती नायकमाह—उज्जागरेति । उज्जागरणकषायिते लोहिते गुरुके अक्षिणी यस्या । मोघेन प्रियानागमनान्निष्फलेन मण्डनेन विलक्षा उद्विग्ना । 'कषायो रसभेदे च सुरभौ लोहिते त्रिषु' मेदिनी[४] । 'मोघा स्त्री पाटलायां स्याद्दीननिष्फलयोस्त्रिषु ।' मेदिनी[५] । खण्डितेयम् ।

कुतश्चिन्नागतो यस्या उचिते वासके प्रिय. ।
तदनागमसन्तप्ता खण्डिता सा मता यथा ॥

इति । प्रारब्धं धर्मकर्म सर्वथा निर्वाह्यमिति धर्मः । स्वामिना कृतोऽपमानः सन्तापहेतुरिति नीतिः । अप्राप्तप्रश्नोपदेशस्य वेशादिमहयां लज्जाकरमिति युक्तिः । दुर्लभराजस्य ॥ ४९४ ॥

अइकोवणा वि सासू रुआविआ गअवईअ सोण्हाए ।
पाअपडणोणआए दोसु वि गलिएसु वलएसु ॥४९५॥

अतिकोपनापि श्वश्रू रोदिता गतपतिकया[६] स्नुषया ।
पादपतनावनतया[७] द्वयोरपि गलितयोर्वलययोः ॥

प्रोषितपतिकायाः स्नुषायाः श्वश्र्वाश्चरणवन्दनं कुर्वत्या अवनतयोर्हस्तयोश्च्युतयोः कोपनापि सा श्वश्रू रुदितेत्येकाऽपरस्यै कथयति—अइ इति । इयमेतादृशी मत्सुतस्य विरहे क्षामा यतः करयोर्वलयभ्रंशो भवतीति रोपत्यागात्कारुण्येन रोदनमुक्तम् ।

१. 'क' is missing in P.
२. लज्जालुः for लज्जाशीला P.
३. सखीनाम् for सखीभ्यः P.
४. P. 159. V. 77-78.
५. P. 84 V. 4. Medini reads मोघोऽस्त्री for मोघा स्त्री.
६. गृहपति० for गतपतिकया P.
७. ० वनता for ० वनतया P.

वज्रयोरिति सप्तमीयम्। विपद्गतेनापि मान्यानां माननाऽवश्यमेव विधेयेति धर्मः। सेवाक्लेशेन कष्टस्य मनो द्रवनीति नीतिः। सज्जानमपि कोपमुत्सृज्य योगिना दयादि कर्मैव विधेयमिति युक्तिः। विदग्धस्य ॥ ४९५ ॥

रोवंति व्व अरण्णे दूसहरइकिरणफससंतत्ता।

अइतारझिल्लिविरुएहि पाअवा गिम्हमज्झण्हे ॥ ४९६ ॥

रुदन्तीवारण्ये दुस्सहरविकिरणस्पर्शसन्तप्ताः।

अतितारझिल्लीविरुतैः[1] पादपा ग्रीष्ममध्याह्ने ॥

काचिदसती जनाकीर्णे एव स्थाने आराय स्वीयमरण्ये सङ्केतगमनं निवेदयन्ती वदति—रोवतीति। पादपाः रुदन्तीवेत्यन्वयः। ओशब्दो दुःखसूचने। भीरुक झिरुका इति प्रसिद्धः कृमिभेदः। ग्रीष्ममध्याह्ने खरतररविकरस्पर्शजः सन्ताप एव पादपानां रोदने हेतुरुत्प्रेक्षा। मध्याह्नसमये तत्रातपादिविरहात् पादपतलेऽभिसारस्थानमतिसाधीय इति सूचनम्। महताऽधर्मेणा स्थावरा जायन्त इति धर्मः। सेवकैः स्वपरिश्रमेण स्वामी बोधनीय इति नीतिः। स्थावरा अपि सुखदुःखज्ञाः, किमुत मानुषा इति युक्तिः। दुर्लभराजस्य ॥ ४९६ ॥

पढमणिलीणमहुरमहुलोहिल्लालिवलवद्धझंकारं।

अहिमअरकिरणणिउरम्बचुम्बिअं दलइ कमलवणं ॥ ४९७ ॥

प्रथमनिलीनमधुरमधुलुब्धालि[2]कुलबद्ध[3]झङ्कारम्।

अहिमकरकिरणनिकुरम्ब[4]चुम्बितं दलति कमलवनम् ॥

कमलवर्णनव्याजेन सङ्केतस्थलं प्रति गमनमात्मनो जारे श्रावयन्तीदमाह—पढमेति। निकुरम्बः समूहः। 'निकुरम्बं कदम्बकम्' अमरः। चुम्बितं स्पृष्टम्। दलति विकसति। प्रातर्धर्मकरणसमयविज्ञापनमिदम्। तदुक्तम्—

उपस्युपसि यत्स्नानं किञ्चिदभ्युदिते रवौ।

प्राजापत्येन तत्तुल्यं महापातकनाशनम् ॥

[इति धर्मः[5]] कस्याप्युपचयः कस्याप्यपचय इति नीतिः। रविकिरणवन्निर्मलज्योतिःस्वरूपज्ञानस्पर्शेन हृत्पद्मप्रकाशो भवतीति युक्तिः। परमेश्वरस्य ॥ ४९७ ॥

---

१ ०भीरुकरुतैः for ०झिल्लीविरुतैः P.

२ ० लोभिष्ठा० for ०लुब्धा० P.

३ बद्ध is missing in P.

४ ० रुम्ब for ० रम्ब० P

५ P 129 V 50

६ Supplied by the Editor

गोत्तक्खलणं सोऊण पिअअमे अज्ज तीअ खणदिअहे ।
वज्झमहिसस्स माल व्व मंडणं उअह पडिहाइ ॥ ४९८ ॥

गोत्रस्खलनं श्रुत्वा प्रियतमे अद्य तस्याः[1] क्षणदिवसे[2] ।
वध्यमहिषस्य मालेव मण्डनं पश्यत[3] प्रतिभाति ॥

सरुषाः सौभाग्यं सपत्न्या मनोदुःखं व्यञ्जयन्ती कापीदमाह—गोत्रेति । गोत्रं नाम । नाम गोत्रं कुलं गोत्रमिति धरणिः । क्षणः उद्धव उत्सव इत्यमरः[4] । वध्यमहिषस्य महाष्टम्या[5]...माला यथा शोभते तथा अस्या अपि । अन्यस्या नाम्नि माह्वेऽन्यस्या नामग्रहे मण्डनं न शोभत इति, यतः 'प्रियेषु सौभाग्यफला हि चारुता' इति कालिदासः[6] । बल्यर्थेक पशुरर्घादि ? ( हैः ) इति धर्मः । हृदयस्वास्थ्यजनकं कर्माचरणीयमिति नीतिः । सांसारिकसुखविरक्तस्य मण्डनादि न धृतिमुत्पादयतीति युक्तिः । दुर्द्दरूढस्य ॥ ४९८ ॥

महमहइ मलअवाओ अत्ता वारेइ मं घराणिंतिं ।
अंकोल्लपरिमलेण वि जो खु मुओ सो मुओ चेअ ॥४९९॥

महमहायते मलयवातः श्वश्रूर्वारयति[7] मां गृहान्निर्यान्तीम्[8] ।
अंकोल्लपरिमलेनापि यः खलु[9] मृतः स मृत एव ॥

वसन्ते काञ्चित् प्रोषितपतिकामन्यत्र नीयमानां काचिज्जरती वारितवती तस्यै सा वदति । कापि विरहोत्कण्ठिता सख्यामात्मावस्थां वा कथयति—महमहइ इति । महमहायते नानाकुसुमसौरभयुक्तो भवति । अङ्कोल्लोऽशोक इति भट्टटीका । अंकोठ इति टवर्गीयद्वितीयः पाठः । मलयमारुतसम्पर्के[10]...शयसन्तापमाकलय्य गृहेभ्यो निर्गच्छन्तीं मां विफलं श्वश्रूर्निवारयति यतो गृहोपान्तस्थिताशोकपरिमलोऽपि मम दुस्सहस्तेन चेन्न मृतास्मि तदा मामकममृग्यामिति भावः। सत्यपि नाशहेतौ सत्यो दुश्चारिण्यो न भवन्तीति

१. तस्या अद्य for अद्य तस्याः P.
२. क्षण॰ for खण॰ Weber
३. पश्यतः for पश्यत P.
४. Cf कम्पोऽथ क्षणः उद्धर्षो मह उद्धव उत्सवः I. 7. 38.
५. The reading is corrupt. A few syllables are missing here.
६. Kumāra V. 1.
७. वारयति is missing in P.
८. P. reads गृह......for गृहान्निर्यान्तीम् ।
९. यो न for यः खलु P.
१०. A few syllables are missing here.

धर्मः । एकेनोपायेन साध्ये कार्ये उपायान्तरापानो न दोषाय, उपायस्य उपायान्तरादूपकत्वादिति नीतिः । अनियतं सांसारिकसुखं हेयमिति युक्तिः । माधवस्य ॥४९९॥

मुहपेच्छओ पई से सा वि हु सविसेसदंसणुम्मइआ ।
दो वि कअत्था पुहइं अमहिलपुरिसं व मण्णंति ॥५००॥

मुखप्रेक्षक पतिस्तस्या[1] सापि खलु [2]सविशेषदर्शनोन्मत्ता[3] ।
द्वावपि कृतार्थौ पृथिवीममहिलापुरुषामिव मन्येते ॥

कयोश्चिन्मिथुनयोरन्योन्यानुरागं सूचयन्ती तत्कान्ताया असाध्यतामाह—मुहेति। महिला स्त्री। जगति नान्यन्मिथुनमस्तीति भाव[4]। सौदाम्पत्यं लोकद्वयसाधकम्। तदुक्तम्—

परस्परानुरागश्च दम्पत्योरतिदुर्लभः ।
स्वर्गोऽपि यत्र धर्मोऽपि त्रिवर्गश्च प्रवर्तते ॥

इति ( धर्मः[5] ) । स्वामिसचिवयोरन्योन्यानुरागो वृद्धिहेतुरिति नीतिः । रागो बन्धहेतु[5], स च सर्वात्मना त्याज्य इति युक्तिः। कण्ठाभरणे[6] प्रथमानुरागानन्तरे सहार्थान्वयोऽयम्। रागोऽनु सह वेदयनोऽत्र पूर्वार्द्धे रञ्जयत्यर्थ.। प्रथमानुरागे सद्भावेन सिद्ध. तदनन्तरेऽपि तथैवानुवर्त्तेत इति । शालवाहनस्य ॥ ५०० ॥

इह पञ्चमं समाप्यते सुललितपदवर्यासुन्दरं सरसम् ।
गाथाशतं नराधिपशालवाहननिर्मिते कोषे ॥

पञ्चमशतसमाप्तिगाथामाह—इहेति । इह पञ्चमं गाथाशतं समाप्यत इत्यन्वयः ।

इति हारितान्नश्रीपीताम्बरकृताया सप्तशत्याष्टीकाया पञ्चमं गाथाशतम् ॥

रइकेलिहिअणिअंसणकरकिसलअरुद्धणअणजुअलस्स ।
रुद्दस्स तइअणअणं पव्वइपरिउंबिअं जअइ ॥ ५०१ ॥

रतिके[7]लिहृतनिवसनकरकि[8]सलयरुद्धनयनयुगलस्य ।
रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥

---

१. अस्याः for तस्याः P.
२ स is missing in P.
३ ०न्म० is wanting in P. Space is left blank
४. ०लपरा० for ०ला० P.
५. Supplied by the Editor.
६. P. 325. SK adds उत्तरार्धे रामस्यार्थं. before प्रथमानुरागे and reads सहसिद्धभावेन for सिद्धभावेन
७ ०कृत० for ०हृत० P.
८ ०किशलय० for ०किसलय० P.

बहुविघ्नशङ्कया षष्ठशतोपक्रमे तद्वारणाय भगवतो महेश्वरस्य स्तुतिमुखेन नमस्कारगाथामाह—रइकेलीति । निवसनं वस्त्रम् ।

नयनयुगकपोलं दन्तवासो मुखान्तः

स्तनहृदयललाटं चुम्बनस्थानमाहुः ।

इति । नग्नस्त्रीदर्शनं निषिद्धं तन्नाचरणीयम् । तदुक्तम्—

अरं भुङ्क्ते चिरं स्नाति दत्तं पुष्पं न जिघ्रति ।

न पश्यति स्त्रियं नग्नां मत्प्रियास्तेन साधव ॥

इति धर्मः ॥ उत्पन्नमतयः कदापि नावसीदन्तीति नीतिः । काम्यवरोधः क्वापि तद्विरह इति संसारावस्थां विमृश्य सच्चिदानन्दास्तन्यमिति युक्तिः । शालवाहनस्य ॥५०१॥

आउच्छणविच्छाअं जाआइ मुहं णिअच्छमाणेण ।

पहिएण सोअणिअलाविएण गंतुं चिअ ण इट्ठं ॥ ५०२ ॥

आपृच्छनविच्छायं[1] जायायाः[2] मुखं निरीक्षमाणेन[3] ।

पथिकेन शोकनिगडायितेन[4] गन्तुमेव नेष्टम्[5] ॥

प्रवासगमनोद्यतः कोऽपि प्रेयसीसंवादा ..[6] स्याश्च मुखं दृष्ट्वा गन्तुमेव न शक्नोतीत्येकाऽपरस्यै कथयति । काचिदभिलषन्तो नायकस्य प्रत्याख्यानार्थं तत्पत्युरागमनं वा दूती वर्णयति—आउच्छणेति । कारुणिका .. हमानाः स्वकार्यमुपेक्षन्त इति धर्मः । स्निग्धानां दुःख कार्यान्तरवैमुख्यं कारयतीति नीतिः । संसारिणां स्नेह एव महानिगडबन्ध इति युक्तिः । तस्यैव ॥ ५०२ ॥

सूईवेहे मुसलं विच्छुहमाणेण दड्ढलोएण ।

एक्कग्गामे वि पिओ समेहि अच्छीहि वि ण दिट्ठो ॥५०३॥

सूचीवेधे मुसलं विक्षिपता दग्धलोकेन ।

एकग्रामेऽपि प्रियः समाभ्यामक्षिभ्यामपि न दृष्टः[7] ॥

उपपतौ जातानुरागा कापि कुलटा जनवादभियाऽवलोकनेऽपि स्वाच्छन्द्यमलभमाना कामप्यास्यां लक्ष्यीकृत्य वदति—सूईवेहे इति । सूचीवेधे मुसलं विक्षिपता

१. आप्रश्न० for आपृच्छन० P.
२ ०याः is missing in P.
३. P reads निरीक्ष्य for निरीक्षमाणेन
४. स्नेह० for शोक० P.
५. न तीयाम् for नेष्टम् P.
६. A few syllables are missing here
७. This verse is missing in P.

दग्धलोकः संशयमुद्भावयति। अल्पमपि दुश्चरितमतिप्रकाशं यातीति तत्र कार्यमिति धर्मः। गूढेङ्गितेन कार्यं साध्यमिति नीतिः। अयोग्योप्यभ्यासवशेन मुक्तौ प्रभवतीति युक्तिः। विक्रमभानोः॥ ५०३॥

अज्जं पि दाव एक्कं मा मं वारेहि पिअसहि! रुअंतिं।

कल्लिं उण तम्मि गए जइ ण मुआ ता ण रोइस्सं॥५०४॥

अद्यापि तावदेकं मा मां[1] वारय प्रियसखि[2]! रुदतीम्।

कल्ये[3] पुनस्तस्मिन्[4]गते यदि न मृता[5] तदा न रोदिष्यामि॥

भा[6]...से प्रियेण प्रवासयात्रा कर्तव्येति श्रुत्वा कयाचिद्रुदितं सा च सख्या निषिद्धा सा सखीमेवोद्दिश्य वदति—अज्जं पीति। एकं दिनमित्यार्थम्। वारणफलमरोदनं तच्च हेत्वभावादेव न भविष्यतीत्यलं रोदनेनेति भावः। मृत्योर्नित्यत्वमाकलय्य 'गृहीत इव केशेषु मृत्युना धर्ममाचरेत्' इति धर्म्यं धर्मत्वरया विधेयमिति धर्मः। यद्विमः कार्यासमर्थो भवतीत्युत्साह आहार्योऽपि कार्यिणा कर्तव्य इति नीतिः। जीवनानित्यतां कश्चिच्छिष्ये प्रतिपादयतीति युक्तिः। सम्भोगेषु विप्रलम्भप्रायं प्रेमपुष्टौ मरणमिति कण्ठाभरणे। सर्वसेनस्य॥ ५०४॥

एहि त्ति वाहरंतम्मि पिअअमे उअह ओणअमुहीए।

बिउणावेढिअजहणत्थलाइ लज्जोणअं हसिअं॥ ५०५॥

एहीति व्याहरति प्रियतमे पश्यतावनतमुख्या।

द्विगुणावेष्टितजघनस्थलया लज्जावनतं हसितम्[8]॥

कस्याश्चिदृतुमत्या लज्जावतीत्वं वैदग्ध्यं च सखी वर्णयति—एहि त्तीति। उत्सवदिने मत्समीपमागच्छेति प्रेयसि वदति। पश्यत[7] एतस्मिन्नवसरे। रजोयोगाव्यभिचारिनितम्बे वाससा द्विगुणावेष्टनमिति स्त्रीणां विचारः। पापे प्रवर्तमानः स्वामी सत्कारेणानुजीविना वारणीय इति धर्मः। अनवसरं कुशला इङ्गितेन प्रकाशयन्तीति

१. मां मा for मा मां P.
२. ०सखी for ०सखि P.
३. कल्ये पुनः is missing in P.
४. कस्मिन् for तस्मिन् P.
५. मरिष्ये for मृता P.
६. A few syllables are missing in P.
७. एतर्हि for पश्यत P.
८. P. reads द्विगुणावेष्टो नितम्बस्य for the second half of this verse.

नीति । विषयेभ्य सत्पुरुषा आकृष्यमाणा अपि (मनो) निवारयन्तीति युक्ति । तस्यैव ॥ ५०५ ॥

मारेसि कं ण मुद्धे ! इमेण रच्चंततिक्खविसमेण ।
भुलआचावविणिग्गअतिक्खअरद्धच्छिभल्लेण ॥ ५०६ ॥

मारयसि क न मुग्धे ! अनेन [1]रक्तान्ततीक्ष्णविषमेण ।
भ्रूलता[2]चापविनिर्गततीक्ष्णतरार्धा[3]क्षिभल्लेन ॥

कामपि स्वरूपा युवतीं कटाक्षेण निरीक्षमाणां कोऽपि कलाकुशलस्तामुद्दिश्य वदति—मारेसि क ण मुद्ध इति । अर्द्धाक्षि एव भल्लमस्त्रविशेषस्तेनानेन हे मुग्धे ! क न मारयसि । अपि सर्वमेव मारयसि । वक्रस्य मुखस्य अन्ते अन्तिके एकदेशे तीक्ष्णेन विषमेण भल्लेन । भ्रूलतामय तत्स्वरूप चाप ततो विनिर्गतेन भल्लेन । '[4]अन्त स्वरूपे नाशे ना(न)स्त्रीशेषेऽन्तिके त्रिषु' । मेदिनी ।[5] येन कर्मणा परिवेदना नोत्पद्यते तदेव कर्म कर्तव्यम् न कश्चिन्मर्माणि स्पृशेदिति धर्म । कुलटा कटाक्षमात्रेणैव पर मारयन्तीति नीति । हरति हि हरिणाक्षीमित्यादिदर्शनेन योषिता सन्निधान वर्जनीयमिति युक्ति । महिपासुरस्य ॥ ५०६ ॥

दिट्ठाइ जं ण दिट्ठो सरलसहावाइ जं च णालविओ ।
उवआरो जं ण कओ त चिअ कलिअं छइल्लेहिं ॥५०७॥

दृष्टया यन्न दृष्ट सरलस्वभावया यच्च नालपित ।
उपचारो यन्न कृतस्तदेव कलित विदग्धै ॥

बहवो विदग्धा एकस्या [1]स्थानमुपगतास्तत्रैकस्तस्या अनुरागविषय , स च तया दर्शनादिविषयो न कृतोऽन्येऽनुसम्भाविता एव येषा विकल्पो जायत इति तस्या सखी तामुद्दिश्य वदति—दिट्ठाइ इति । यन्न दृष्टस्त्वयेत्यार्थम् । उपचारोऽभ्यागतानुरूपपूजनम् । छइल्लैर्विदग्धैराकलितम् इयमस्मिन् प्रवृत्तेति । यत एवमाकारेण लोकाकलनभयात्तया तस्मिन्न रूपदर्शनादेरपह्नव कृत इति भाव । उचितक्रियाया अकरणे लोक शङ्कत इति धर्म । अपायमपरिभाव्योपायचिन्ता कार्यनाश करोतीति नीति । दृष्ट्यादिविशेषज्ञानी ज्ञायत इति युक्ति । अपिहिताख्य मीलितमिदम् । तदुक्त कण्ठाभरणे[2]—

---

१ वक्त्रा॰ for रक्ता॰ P
२ P adds मय after भ्रूलता
३ ॰विनिर्गतेनार्द्धा॰ for ॰विनिर्गततीक्ष्णतरार्धा॰ P
४ P 71 V 2 Medini reads अन्त for अन्त and adds न before स्त्री
५ P. 177

वस्त्वन्तरतिरस्कारो वस्तुना मीलितं स्मृतम् ।
पिहितापिहिते चैव तद्गुणातद्गुणो च तत् ॥ [५०७]

**तुह दंसणे सअण्हा सद्दं सोऊण णिग्गआ जाइं ।**
**तइ वोलीणे ताइं पआइ वोढव्वआ जाआ ॥ ५०८ ॥**

तव दर्शने सतृष्णा शब्दं श्रुत्वा निर्गता यानि[1] ।
त्वयि[2] व्यतिक्रान्ते तानि पदानि वोढव्या जाता ॥

अत्र यदृच्छया न दृष्ट इत्यादिना तदनुरागात्तद्दर्शनाकाङ्क्षिणी तेन तद्गृहनिकटे गच्छता किमपि भाषितं तच्छ्रुत्वा गृहाद्विनिर्गताऽनन्तरं सा यावन्ति पदानि गता ताव-न्त्यन्येन नीते ति तस्या अनुरागातिशयं पुरुषस्य कृते तत्सखी नायिकाया अवस्थया उपनायकमुत्तरलयति—तुह दसणे इति । यानि पदानि[3] पदवीर्निर्गता तावन्ति पदानि वोढव्या उद्वहनीया जाता । अन्येषामित्यार्थम् । त्वद्दर्शनालाभे जातमोहादेवमिति भाव । प्रत्यक्षेण देवतादिदर्शनार्थमुद्यतस्य तदसम्भवे मनोदुःखं भवत्येवेति धर्म. । कार्या-रम्भे तद्वैफल्यमिति नीति. । तृष्णाया सर्वे एवाकृष्यतेऽत: सा न विधेयेति युक्ति । श्रीमाधवस्य ॥ ५०८ ॥

**ईसामच्छररहिएहि णिव्विआरेहि मामि ! अच्छीहिं ।**
**एण्हिं जणो जणम्मिव णिअच्छए कुह ण झिज्जामो ॥५०९॥**

ईर्ष्यामत्सर[4]रहिताभ्या[5] निर्विकाराभ्या मातुलान्य[6]क्षिभ्याम् ।
इदानीं जनो जनमिव निरी[7]क्षते कथं न[8] क्षीयामहे ॥

अनुदिन दुर्बलायमाना नायिका कथ त्व दुर्बलेति सख्या पृष्टा सा तामाह—ईसामच्छरेति । ईर्ष्यैत्यागोऽशास्यमात्रप्रतिपादक जनमुदासीनमिव, तथा च स साकूतं न मामवलोकतेऽत: कथ न क्षीया भवामीति भाव । ईर्ष्यादि न कार्यमिति धर्म: । निपुणा दृष्टिविकारैरेव वैरस्यमाकलयन्तीति नीति । मुमुक्षव. सर्वत्र समाना एव भवन्तीति युक्ति । रेखाया ॥ ५०९ ॥

---

१. नि is missing in P
२. त्वयि is missing in P
३. पदानि is supplied by the Editor.
४. मात्सर्य for मत्सर P.
५. P. adds मातुलि after रहिताभ्याम्
६. मातुलानि is missing in P.
७. ०द्य० for ०क्ष० P.
८. ल० for न P.

अण्णं पि किं पि पाविहिसि मूढ ! मा तम्म दुक्खमेत्तेण ।
हिअअ ! पराहीणजणं महंत तुह केत्तिअं एअं ॥ ५१२ ॥

*अन्यदपि किमपि प्राप्स्यसि मूढ ! मा ताम्य दुःखमात्रेण ।*
*हृदय ! पराधीनजनं महत्तव कियदेतत् ॥*

निजवनितापरतन्त्रं कमपि नायकमनुकूलयितुं सूचयन्ती कापि हृदयमुपालभते—अण्णं पीति । हे हृदय ! मूढ ! दुःखमात्रेण मा ताम्य मा ग्लानिं गच्छ । अन्यदपि अनिर्वचनीयमनिष्टं प्राप्स्यसि । पराधीनं जनं महद् इच्छत् हे हृदय ! तव कियदेतत् ? अपि तु न किमपि, यतोन्यवश्यस्यात्मसात्करणं दुःखसाधनमेवेति भावः । तमु ग्लानौ 'शमामष्टानां दीर्घः' । श्यनि मध्यमपुरुषैकवचने रूपम्—ताम्येति । महदिति सम्बोधने चेति शतृ । 'मात्रं कार्त्स्न्येऽवधारणे' धरणिः । अशक्यारम्भो दुःखमात्रफलो न कर्तव्य इति धर्मः । अन्यदीयस्याकर्षणं दुःखेनैव भवतीति नीतिः । सांसारिकं सुखं हेयमिति युक्तिः ॥ ५१२ ॥

वेसोसि जीअ पंसुल ! अहिअअरं सा हु वल्लहा तुज्झ ।
इअ जाणिऊण वि मए ण ईसिअं दड्ढपेम्मस्स ॥ ५१३ ॥

द्वेष्योऽसि यस्याः पांसुल[1] अधिकतरं[2] सा[3] खलु वल्लभा [illegible] ।
इति ज्ञात्वापि[4] मया[5] न ईर्ष्यितं[6] दग्धप्रेम्णः ॥

वेसो इति । हृदय ! मत्तानाशय ! दग्धस्य ईदृशस्यानपेक्षितस्य प्रेम्णः कृते मया न ईर्ष्यितम्[6] । ईर्ष्याकोपस्य विशेषो न कृतः । यत्र ईदृशोऽपि त्वयि चिन्तां करोमीति तात्पर्यम् । यद्वा न ईर्षितं प्रभुत्वेन न व्यवहृतम् । रागाक्रान्तहृदया दोषं जानन्तोपि तत्परित्यागं कर्तुमसमर्था भवन्तीति धर्मः । अभीष्टस्यानपराधो नीतिः । ज्ञानिना स्वहृदयेऽपि न विश्वसनीयमिति युक्तिः । रमिज्ञस्य ॥ ५१३ ॥

सा आम सुहअ ! गुणरूअसोहिरी आम णिग्गुणा अ अहं ।
भण तीअ जो ण सरिसो किं सो सव्वो जणो मरउ ॥५१४॥

---

१. पाशुल for पांसुल P.
२. हृदय for अधिकतरम् P.
३. मा for सा P.
४. जानन्त्यापि for ज्ञात्वापि
५. तया for मया P.
६. ईर्षितम् for ईर्ष्यितम् P.

सा आम सुभग[1] गुणरूप[2]शोभनशीला[3] आम निर्गुणा चाहम् ।
मया तस्या यो न सदृश किं स[4] सर्वो जनो म्रियताम् ॥

अन्या वनिता च स्तुवन्तं कान्तं कापि सेर्ष्योपालम्भमाह—सा आमेति । आम सेर्ष्यानुमतावि ति भट्टटीका । असमोऽसाधारणो यो गुणास्तेन शोभिनी, तस्या अधमो जनो जीवत्येवेति ईर्ष्योक्ति । महता सर्वेषामेव परितोष कर्तव्य इति धर्म । परहृदयानुवर्त्तनेन स्वहानिमप्यूरीकृत्य स्वकार्यं चिन्तनीयमिति नीति. । योगिनस्तु म्रियन्ते नतु कामचिन्तका भवन्तीति युक्ति. । यश.सिंहस्य ॥ ५१४ ॥

संतमसंतं दुक्खं सुहं च जाओ घरस्स जाणंति ।
ता पुत्तअ ! महिलाओ सेसाउ जरा मणुस्साणं ॥५१५॥

सदसद्दुःखं सुखं च[5] या गृहस्य जानन्ति ।
ता. पुत्रक ! महिला. शेषा जरा मनुष्याणाम् ॥

वेश्याभिलाषात्पुत्रं वारयन्ती कापि कुलवधूप्रशंसामाह । स्वसुताया अवकाशार्थं सधनं कमपि पुरुषमाह्वयन्ती काचित् कुट्टनी वा शिक्षयति—संतमिति । गृहस्य गृहपतेरिति प्राचीना टीका । तत्सुखदुःखज्ञानात्ता एव महिला , शेषा सुखमात्राभिलाषिण्यः क्षयमात्रहेतुत्वाज्जरा एव मनुष्याणाम । यथा जरा क्षयहेतुरेकस्तथा ता अपीत्यर्थः ।

गृहाश्रमात्परं नास्ति पुसा स्वर्गस्य साधनम् ।
शीलशौचगुणोपेता यदि भार्या वशानुगा ॥

इति धर्म ।

सम्पत्तौ च विपत्तौ च मरणे च न मुह्यति ।
सा स्वीया ता प्रति प्रेम जायते पुण्यकारणम् ॥

इति । समदुःखसुखो यो न भवति तत्रानुबन्धो न कर्तव्य इति नीति । समदुःखसुखो युक्त्यधिकारी भवतीति युक्ति । बहुलस्य ॥ ५१५ ॥

हसिएहि उवालंभा अच्चुवआरेहि खिज्जिअव्वाइं ।
अंसूहि भंडणाइं एसो मग्गो सुमहिलाणं ॥ ५१६॥

१ P adds असम before गुण
२ रूप is missing in P
३ ०शोभिनी for ०शोभनशीला P
४. स॰ missing in P.
५ वा for च P.

हसितैरुपालम्भा अन्युपचारे खेदितव्यानि ।

अश्रुभिर्भण्डनानि एष मार्गः सुमहिलानाम् ॥

काञ्चिद् दृष्ट्वा रूपयौवनसम्पन्ना प्रियापराधलेशेन रुष्ट वदन्तीं काचिद्वितैषिणी कुलवधूवृत्त शिक्षयन्ती सोपदेशमिदमाह—हसिएहि इति। उपालम्भो नैव परुषोक्त्या किन्तु हसितै । अत्युपचारे खेदितव्यानि नतु गृहकार्यपरित्यागात्। भण्डन कलह खलीकार सर्वाश्रत्यागान्नतु विरुद्धवाक्यैः । इति। 'भण्डन कवचे युद्धे खलीकारेऽपि न द्वयो' इति मेदिनी[2] । अय च कुलस्त्रीया धर्म इति धर्म । कुशला कृतेऽप्यपराधे कार्यबुद्धया उत्कट कोप न कुर्वन्तीति नीति । सर्वसहिष्णुता मुक्तिरिति कश्चिच्छिष्यमुपदिशतीति युक्ति । कण्ठाभरणे[3] श्लाघनीयमाना ललितेय नायिका । कुमारिलस्य ॥५१६॥

उल्लावो मा दिज्जउ लोअविरुद्ध त्ति णाम काऊण ।

समुहावडिए को उण वेसे दिट्ठिं ण पाडेइ ॥५१७॥

उल्लापो मा दीयता लोकविरुद्ध[4] इति नाम कृत्वा ।

सम्मुखापतिते क पुनर्द्वेष्ये दृष्टिं न पातयति ॥

प्रेयसापमानिताया वृत्तेऽपि तद्दर्शने चातुरस्क न वृत्तमिति साऽन्यामुपालभमाना वदति । जनापवादभयादकृतसम्भाषणेऽपि कान्तेऽलमुद्वेगेनेति वदन्तीं सखीं काप्यतीद[5] सरोष वा प्राह—उल्लावो इति । उल्लापोऽध्यवसायवाक्यमिति भट्टीका । नाम क्रोधे । 'नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च' इति मेदिनी । नामेति स्थाने । आमेति ईर्ष्यानुमतौ । पातयति ददाति । विपद्गतोऽलीकाश्वासनेनाप्याश्वासनीय इति धर्म । कार्यदत्तहृदया हितैषिणामपि शिक्षाया क्रुध्यन्तीति नीति । मुमुक्षवो लोकैषणा नापेक्षन्ते इति युक्ति । मन्मथस्य ॥ ५१७ ॥

साहीणपिअअमो दुग्गओ वि मण्णइ कअत्थमप्पाण ।

पिअरहिओ उण पुहविं पि पाविउ दुग्गओ चेअ ॥५१८॥

स्वाधीनप्रियतमो दुर्गतोऽपि मन्यते कृतार्थमात्मानम् ।

प्रिय[6]रहित पुन पृथिवीमपि प्राप्य[7] दुर्गत एव ॥

---

१ स्व० for सु० P

२ P 120 V 100

३ P 846

४ विरुद्धमिति for विरुद्ध इति P

५ काप्यलीकम् is suggested for काप्यतीदम्

६ प्रिया for प्रिय P

७ लब्ध्वा for प्राप्य P

हृदयङ्गमकान्तारहितः कश्चिद्वनेश्वरः सानुतापमिदमाह। अशोकं कमपि दृष्ट्वा कापि कामिनीमुत्कर्षयन्ती वा वदति—साधीयेति। स्वाधीना प्रियतमा यस्येति स्वाधीनप्रियतमः। अतिक्रान्तसङ्केतसमया नायिकामुपालभमानो नायकः सरोषमिदमाह वा। सौदाम्पत्यमेव सर्वस्मात्लोकद्वयसाधनमिति धर्मः। वचनकरः प्रभुः सुखमुत्पादयतीति नीतिः। आयत्तप्रकृतिपुरुषपरिचयेन कृतार्थता भवतीति युक्तिः। ईश्वरस्य ॥५१८॥

किं रुअसि किं व सोअसि किं कुप्पसि सुअणु ! एक्कमेक्कस्स ?

पेम्मं विसं व विसमं साहसु को रुंधिउं तरइ ॥५१९॥

किं रोदिषि किं वा शोचसि[1] किं कुप्यसि सुतनु ! एकैकस्मै[2] ।

प्रेम विषमिव विषमं कथय[3] को रोद्धुं शक्नोति ॥

एकभार्यस्यापराधनेशमवाप्य कृतकोपरोदना कान्ता कयाचित्सखिप्योपदिश्यते—किं रुदसीति। प्रतिपक्षाभावादेवेत्यभिधानम्। यथा विषं विसर्पद् रोद्धुं न शक्यते तथा प्रेमापीत्यर्थः। प्रेम चेदस्ति तव विकल्परं ततः किं रोदनादिनेति भावः। कः शक्नोत्यपि तु न कोपीत्यर्थः। रोदनादि निषिद्धं नाचरणीयमिति धर्मः। प्रेम्णोऽवरोधो भक्तो न कर्तव्य इति नीतिः। संसारेऽलं रोदनादिना तद्विघटनाय यत्न कर्तव्य इति युक्तिः। तस्यैव ॥५१९॥

ते अ जुआणा ता गामसंपआ तं च अम्ह तारुण्णं ।

अक्खाणअं व लोओ कहेहि अम्हे वि तं सुणिमो ॥५२०॥

ते च युवानस्ता[4] ग्रामसम्पदस्तच्चास्माकं तारुण्यम् ।

आख्यानकमिव[5] लोकः कथयति वयमपि तच्छृणुम ॥

गतयौवना काचित्स्वीयं तारुण्यं लोकमुखादाकर्णयन्ती साश्चर्यं वदति। वार्द्धके तरुणानामकमनीयत्वात् कापि कुलटा सनिर्वेदं सा इद प्राह—ते च जुआणा इति। आख्यान पुरावृत्तम्। काश्चिदनभ्युपगच्छन्तीमङ्गीकारयितुं कुट्टनी यौवनानित्यत्वमाह। 'किं करिष्यति मन्दात्मा समर्थेन न यत्कृतम्' इति धर्मः। कालवशेन यदुत्पद्यते तत्तदैव पचेति नीतिः। सर्वमिदमनित्यमिति युक्तिः। शालवाहनस्य ॥ ५२० ॥

---

१. किमु शोचसे for किं वा शोचसि P.
२. एका एकस्य for एकैकस्मै P.
३ कथय is missing in P.
४ P. adds च after ताः.
५ आख्यान for आख्यानक P.

बाहोहभरिअगंडाहराइ भणिअं विलक्खहसिरीए ।
अज्ज वि किं रूसिज्जइ सवहावत्थं गअं पेम्मं ॥५२१॥

बाष्पौघभरित[1]गण्डाधरया भणितं विलक्षहसनशीलया[2] ।
अद्यापि किं रुष्यते[3] शपथावस्थां गतं प्रेम[4] ॥

काचित्सौभाग्यदृप्ता प्रियापराधमुपालभ्य गृहीतमाना प्रियेणानुनेतुमारब्धा । त्वदन्या न मम प्रेयसीति शपथेन प्रत्ययं कारयता प्रियेणानुनीयमाना सोपालम्भमिदमाह—बाहोहेति[5] ॥ ५२१ ॥

ण वि तह अणालवंती हिअअं दूमेइ माणिणी अहिअं ।
जह दूरविअंभिअगुरुअरोसमज्झत्थभणिएहिं ॥५६५॥

नापि तथानालपन्ती हृदयं दुनोति[6] मानिन्यधिकम् ।
यथा दूरविजृम्भितगुरुकरोषमध्यस्थभणितैः ॥

...[7]न्यै संज्ञापमिदमाह[8]—न वि तहेति । अधिकं यथा स्यादेवम् । दूरमत्यर्थं विजृम्भितो गुरुरोषो यत्र । एतादृशैर्मध्यस्थानां भणितैर्यथा हृदयं तापयति न तथानालपन्ती तापयतीत्यन्वयः । मध्यस्थे ? (स्था) दूती । हृदयकालुष्येण क्रिया न कर्तव्येति धर्मः । स्निग्धस्य मध्यस्थवचनमपि सन्तापकारि स्यादिति नीतिः । मानरोपादयः शरीरजाः शत्रवो नित्यं जेतव्या इति युक्तिः । तस्यैव ॥ ५६५ ॥

गंधं अग्घाअंतअ पक्ककलंबाण बाहभरिअच्छ !
आसमु पहिअजुआणअ ! घरिणिमुहं मा ण पेच्छिहिसि ॥५६६॥

गन्धमाजिघ्रन्पक्वकदम्बानां बाष्पभृताक्ष !
आश्वसिहि पथिक[9]युवन् ! गृहिणीमुखं मा न प्रेक्षिष्यसे ॥

---

१. ०मृत० for ०भरित० P.
२. विलक्षं हसन्त्या for विलक्षहसनशीलया P.
३. न विभाव्यते for रुष्यते P.
४. प्रेम is missing in P.
५. *Pitāmbara's commentary* on this as well as on the following forty-three verses is missing in P. The Ms adds on the margin :— त्रुटिरत्र श्लो० ४४/४.
६. तापयति for दुनोति P.
७. *Pitāmbara's commentary on verse 565 begins from here.*
८. संज्ञापयन् is suggested for संज्ञापम्.
९. पान्थ for पथिक P.

वर्षासु प्रियतमाविनाशमाशङ्क्य जातास्रं पथिकं कापि समाश्वासयति । कापि केनापि पथिकेन सह जातानुरागा तं वदति—गन्धमिति । त्वदागमनबद्धाशाया मुदं प्रेक्षिष्यस इति भावः ।

आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां
सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि ।[1]

इति । व्याकुलहृदया महात्मभिराश्वसनीया इति धर्मः । आशया मायावारण्यमिति नीतिः । गन्धोपि विषयसमाकर्षको भवतीति स च वारणीय इति युक्तिः । प्रवरसेनस्य ॥५६६॥

गज्ज मइं चिअ उवरिं सव्वत्थामेण लोहहिअअस्स ।
जलहर ! लंबालइअं मा रे मारेहिसि वराइं ॥५६७॥

गर्ज ममैवोपरि सर्वस्थाम्ना लोहहृदयस्य ।
जलधर ! लम्बालकिकां मा रे मारयिष्यसि[2] वराकीम् ॥

कोऽपि स्वामिनियोगाद् गृहमागन्तुमसमर्थः सन् जलधरं सक्रोधमाह—गज्जेति । स्थाम बलम्, सर्वबलेनेत्यर्थः । रे नीच ! सम्बोधनम् । लम्बोऽलको यस्यास्ताम् । वराकीं मा मारयिष्यसीत्यन्वयः । पुंसो विक्रमः स्त्रीषु न शस्त इति धर्मः । कार्यमात्मपीडयापि रचणीयमिति नीतिः । स्त्रीहेतुकमिदं संसारदुःखमित्यतो हेयमिति युक्तिः । कलशस्य ॥ ५६७ ॥

पंकमइलेण छीरेक्कपाइणा दिण्णजाणुवडणेण ।
आणंदिज्जइ हलिओ पुत्तेण व सालिछेत्तेण ॥५६८॥

पङ्कमलिनेन क्षीरैकपायिना दत्तजानुपतनेन ।
आनन्द्यते [3]हलिकः पुत्रेणेव शालिक्षेत्रेण ॥

आसन्नफलोदयः कृतक्लेशो हर्षातिशयं जनयतीति प्रतिपादयन् कश्चिद्धालिकं निदर्शयति । शालिक्षेत्राण्यामासन्नच्छेदादभिसारस्थानान्तरं कुलटा जारं श्रावयति वा—पंकमइलेनेति । शालिक्षेत्रेण हालिक आनन्द्यत इत्यर्थः । पङ्कमलिनेन क्षेत्रेण । क्षीरमेकमर्थात् पीतं बाल्येन यत्र तेन क्षेत्रेण । क्षीरमात्रं पीतमस्ति नतु पाकादिनिर्वाहो धान्यानाम् । दत्तं जानुपतनमिव पतनं शालिक्षेत्रेण । यथा कश्चित्पुत्रेणानन्द्यते तथेत्यर्थः । पङ्कमलिनेनेत्यादि तत्रापि विशेषणम् । उत्पत्तिमात्रेण पुत्रो लोकद्वयसाधको भवति । तदुक्तम्—पुन्नाम्नो नरकात्त्रायत इति पुत्र इति धर्मः । आसन्नफलोदयः क्लेशो हर्षातिशयं

१. Kalidāsa's Meghadūta 1. 10.
२. मारयसि for मारयिष्यसि P.
३ ॰हालिकः for हलिकः P.

जनयति । तदुक्तम्—'क्लेशः फलेन हि पुनर्नवतां विधत्ते' इति नीतिः । पुत्र क्षेत्रादिसंसारिणामानन्दकरो न तु मुमुक्षूणामिति युक्तिः । बहुगुणस्य ॥ ५६८ ॥

कइ मे परिणइआले खलसंगो होहिइ त्ति चिंतंतो ।
ओणअमुहो ससूओ रुवइ व साली तुसारेण ॥ ५६९ ॥

कथं मे परिणतिकाले खलसङ्गो[1] भविष्यतीति[2] चिन्तयन् ।
अवनतमुखः सशूको रोदितीव[3] शालिस्तुषारेण ॥

सन्निवेशविशेषेण शालीनां रोदनं कश्चिदुत्प्रेक्षते । शालिक्षेत्रे पाकारम्भेऽनभिज्ञ... आह वा कापि श्रावयति—कइ मे इति । पाकवर्द्धके परिणतौ । खलः खरिहान इति प्रसिद्धः दुर्जनश्च । ससूओ सशोक इति च । दुर्जनैः सम सङ्गो लोकद्वयविरोधी । तदुक्तम्—

निश्वासोद्गीर्णहुतभुग्धूमधूम्रीकृताननैः ।
वरमाशीविषैः सङ्गः कुर्यान्नत्वेव दुर्जनैः ॥

इति धर्मः । दुर्जनैः समं सङ्गो न विधेय इति नीतिः । भाव्यपि दुःखं हेयमिति युक्तिः । शालवाहनस्य ॥ ५६९ ॥

संझाराओत्थइओ दीसइ गअणम्मि पडिवआचंदो ।
रत्तदुऊलंतरिओ थणणहलेहो व्व णववहुए ॥ ५७० ॥

सन्ध्यारागोत्स्थगितो दृश्यते गगने प्रतिपच्चन्द्रः ।
रक्तदुकूलान्तरितः "स्तननखलेख इव नववध्वाः"[4] ॥

कापि कुलवध्वा नखाघातं दृष्ट्वा कथयति । उपपतिसमीपगमनाय चन्द्रस्य क्षीणतया ज्योत्स्नाया अभावं वर्णयन्ती दूती कुलटां स्मरयति वा—सङ्केति । उत्स्थगितः पिहितः 'स्थगे संवरणे' इति धातोरनुसारात् । सन्ध्यागमो वो रजनीयो धार्मिकेन इति धर्मः । अवस्थाभेदेन महान्तोऽपि लघवो सादृश्य यान्तीति नीतिः । अविश्रान्तरतज्ञानोत्प्रेक्षेव कस्यचिच्छिष्य बोधयितुमिति युक्तिः । चामीकरस्य ॥ ५७० ॥

अइ दिअर ! किं ण पेच्छसि आआस किं मुहा पलोएसि ?
जाआइ बाहुमूलम्मि अद्धअदाण परिवाडिं ॥५७१॥

---

१ Kalidasa's Kumara V. 86
२ ० सयोगो for ०सङ्गो P
३ भवतीति for भविष्यतीति P
४. रुदतीव for रोदितीव P
५ नववध्वा नखनिपात इव for स्तननखलेख इव नववध्वा P

अयि देवर ! किं[1] न[1] प्रेक्षसे आकाशं किं[2] मुधा प्रलोकयसि[3] ।
जायाया बाहुमूलेऽर्द्धचन्द्राणां परिपाटीम्[4] ॥

कापि देवरं सपरिहासेर्ष्यमाह—अइ दिअरेति । "विंजोली पङ्क्ति वा"[5] । 'मुधा निरर्थकं व्यर्थम्' एवममरः[6] । जायाया बाहुमूलेऽर्द्धचन्द्रपरिपाटिं[7] किं न प्रेक्षस इत्यन्वयः । नवश्चन्द्रोऽवश्यं नमस्करणीय इति धर्मः । समत्सरा परिहासेनापि परेषां रहस्यं प्रकाशयन्तीति नीतिः । प्रथमत एव शून्यध्यानासक्तस्य सोपानक्रमोपदेशोऽयमिति युक्तिः । कण्ठाभरणे[8] हेलादीत्यादिग्रहणेन भावादयो गृह्यन्ते तत्र परिहासः क्रियामयमिति । अर्जुनस्य ॥ ५७१ ॥

वाआइ किं भणिज्जउ केत्तिअमेत्तं व लिक्खए लेहे ।
तुह विरहे जं दुक्खं तस्स तुमं चेअ गहिअत्थो ॥५७२॥

वाचा[9] किं[10] भण्यतां[11] कियन्मात्रं वा लिख्यते लेखे ।
तव विरहे यद्दुःखं तस्य त्वमेव गृहीतार्थः ॥

सखि सन्दिशेति काप्युक्ता सती प्रोषितमुद्दिश्य वदति—वाआ इति । गृहीतो ज्ञातः लेखादपि । मन प्रसादेन यत्क्रियते तदेव कर्म कर्तव्यम् । मन पूतं समाचरेदिति धर्मः । हितैषिणाऽभिमतेनानुनीयमानेन लि(ले)खनादि नाऽपेक्षणीयमिति नीतिः । एतादृशं सांसारिकं दृष्ट्वा योगिनोदासीनेन भवितव्यमिति युक्तिः । चारुदत्तस्य ॥ ५७२ ॥

मअणग्गिणो व्व धूमं मोहणपिंच्छि व लोअदिट्ठीए ।
जोव्वणधअं व मुद्धा वहइ सुअंधं चिउरभारं ॥ ५७३ ॥

मदनाग्नेरिव धूमं[12] मोहनपिच्छिकामिव[13] लोकदृष्टेः[14] ।
यौवनध्वजमिव मुग्धा वहति सुगन्धं चिकुरभारम् ॥

---

१. किमु for किं न P.

२ किं is missing in P.

३. प्रलोकयसे for प्रलोकयसि P

४ ०पाटिम् for ०पाटीम् P.

५. The phrase 'विंजोली पङ्क्ति वा' is out of place here Its proper place is in the commentary on stanza 576.

६. Cf. 'व्यर्थे तु वृथा मुधा' III. 3.4.

७. ०पाटीम् for ०पाटिम् is suggested.

८. P. 309.

९. वाचया for वाचा K.

१०. किमु for किम् P.

११. ०तां is missing in P.

१२. ०मेर्धूममिव for ०ग्नेरिव धूमम् P.

१३. ०पिच्छ० for ०पिच्छिका० P.

१४. लोकः दृष्टीनाम् for लोकदृष्टेः P.

कस्याश्चित्सौन्दर्यातिशय ख्यापयन्ती कापि कमपि युवान प्रबोधयति—मअरा-गिगयो इति । पिच्छिकामयूराणामैन्द्रजालिकेन व्यामोहनीक्रियते । 'चिकुर कुन्तलो वाल· कच पेश शिरोरुह् ' इत्यमर [१] । दुर्वहमप्युत्तम वहनीयमिति धर्म । सगुण एव बहूना रञ्जन करोतीति नीति । अस्तु तावदन्यचिकुरभार एव स्त्रीणा व्यामोहक इति ता योगिना दूरत परिहर्त्तव्या इति युक्ति । तस्यैव ॥ ५७३ ॥

गिरिसोत्तो त्ति भुअग महिसो जीहाइ लिहइ संतत्तो ।

महिसस्स कण्हपत्थरझरो त्ति सप्पो पिअइ लालं ॥ ५७४ ॥

गिरिस्रोत इति भुजङ्ग[२] महिषो जिह्वया लेढि सतप्त ।

महिषस्य कृष्णप्रस्तरझर इति सर्प [३] पिबति लालाम् ॥

दीर्घरतार्थ पत्युरन्यचित्तता कारयितु कापीद दर्शयितुमाह—गिरिसोत्तो इति । लेढि आस्वादयति । लाला लार इति ख्यातान् । महिषस्य लालामित्यन्वय । महिष-सर्पयोर्यथाऽविरोधस्तथाऽविरोध सर्वे सम विधेय इति धर्म । विरुद्धैरपि मलिन न विधेय-मिति नीति । रोगादि च त्यक्त्वा योगाभ्यासो विधेय इति युक्ति । इय च गाथा टीकान्तरे न प्राप्ता ॥ ५७४ ॥

रुअं सिट्ठं चिअ से असेसपुरिसे णिअत्तिअच्छेण ।

बाहोल्लेण इमीए अजंपमाणेण वि मुहेण ॥ ५७५ ॥

रूप शिष्टमेव[४] तस्याशेषपुरुषे निवर्तिताक्षेया ।

बाष्पार्द्रेयास्या[५] अजल्पतापि[६] मुखेन ॥

अनुरागानुनय सख्या कस्मिश्चित्सखी समुन्नयति—रुअमिति । एतस्या मुखेन तस्य रूप कथितमेवेत्यन्वय । अशेषे पुरुषे निवर्तिते अक्षिणी येन तादृशेन मुखेन । मुख-क्रमेणैव धार्मिकोऽधार्मिकश्च ज्ञायत इति धर्म । इङ्गितैनैवाभिज्ञा परेषामभिप्रायमाकलयन्तीति नीति । मुखप्रसाद एवाघो (एव सद्यो) योगप्रतिपादक इति युक्ति । देहलस्य ॥५७५॥

रुदारविंदमंदिरमअरंदाणंदिआलिरिञ्छोली ।

झणझणइ कसणमणिमेहल व्व महुमासलच्छीए ॥५७६॥

---

१ II 6 95

२ भुजङ्ग for भुजङ्गम् P

३ सर्पोऽपि for सर्प P

४. कथितमेव for शिष्टमेव P

५ वास्या० for वाष्पा० P

६ ० या तस्या for ० यास्या P

७ अजल्पमानेनापि for अजल्पता

बृहद्दरविन्दमन्दिरमकरन्दानन्दितालिपङ्क्तिः ।
झणझणायते कृष्णमणिमेखलेव मधुमासलक्ष्म्याः ॥

वसन्ते प्रभूतकमलरसपानानन्दितमधुकरपङ्क्तिवर्णनेन मधुपानमभिलषन्ती काचिन्नायकमिदमाह—रुंदारविंदेति । बृहदरविन्दं मन्दिरमिव तस्य मकरन्देनानन्दितालिनो भ्रमरस्य पङ्क्तिः सा । झणझणायते अव्यक्तं शब्दमनुकरोति । अत्रोत्प्रेक्षते—मधुमासो वसन्तः तस्य लक्ष्म्याः । कृष्णमणिरिन्द्रनीलस्तद्घटिता मेखला क्षुद्रघण्टिकेवेति । रुंदं बृहदिति । विंजोली पङ्क्तावित्ति देशी । आश्रयत्वेन मन्दिरनिरूपणम् । प्रभातसन्ध्याप्रकाशनेन धर्मः । सेव्यस्य सेवकेन सदा शोभैव कार्येति नीतिः । मदजनकतया मधुपानादीनां योगित्वमिति युक्तिः । इन्द्रराजस्य ॥ ५७६ ॥

कस्स करो बहुपुण्णप्फलेक्कतरुणो तुहं विसम्मिहइ ।
थणपरिणाहे मम्महणिहाणकलसे व्व पारोहो ॥ ५७७ ॥

कस्य करो बहुपुण्यफलैकतरोस्तव विश्रमिष्यति ।
स्तनपरिणाहे मन्मथनिधानकलश इव प्ररोहः ॥

तव स्तनपरिणाहे यस्य हस्तो लगिष्यति स एव पुण्यवानिति सखी नायिकां वर्णयति—कस्सेति । बहूनि पुण्यान्येव फलानि यस्य एकस्य तरोरिव कस्य करः प्ररोह इव पिधानमिव तव स्तनपरिणाहे निसंमास्यति व्याप्य स्थास्यतीत्यन्वयः । मन्मथस्य निधानं निधिस्तस्य कलशे इव स्तने । श्रुतिच्छन्नस्यान्वयोऽत्र । यथा घटादि मुखे पिधानं व्याप्य तिष्ठति तथेत्यर्थः । विना पुण्यं विशिष्टं नोदेतीति धर्मः । पौरुषमपि पुण्येनैव फलतीति नीतिः । फलमभिमन्याय पुण्याचरणं बन्धहेत्विति युक्तिः नायिका अनूढा कुमारीयमिति कण्ठाभरणे[2] । अनुरागस्य ॥ ५७७ ॥

चोरा सभअसतण्हं पुणो-पुणो पेसअंति दिट्ठीओ ।
अहिरक्खिअणिहिकलसे व्व पोढवइआथणुच्छंगे ॥५७८॥

चोराः सभयसतृष्णं पुनःपुनः[3] प्रेषयन्ति दृष्टी[4] ।
अधिरक्षितनिधिकलश इव प्रौढपतिकास्तनोत्सङ्गे ॥

१. न संमास्यति तव for तव विश्रमिष्यति P.
२. P. 345.
३. घन...for पुन.पुनः P.
४. दृष्ट्या: for दृष्टी: P.

कमनीयवनिता वशीकृता दोषं न गणयन्तीति सूचयन्ती दूती जारमुत्साहयति-चोरा इति । प्रौढः प्रवीरः । यो यत्रानुरक्तः स तत्पापादपि मनो निवर्तयितुं न शक्नोतीति धर्मः । कार्यसक्ताः प्रत्यवायं न गणयन्तीति नीतिः । तृष्णाभयादिकं मुमुक्षुभिर्हेयमिति युक्तिः । समर्थस्य ॥ ५७८ ॥

उव्वहइ णवतणंकुररोमंचपसाहिआइ अंगाइं ।

पाउसलच्छीअ पओहरेहि परिपेल्लिओ विंझो ॥५७९॥

उद्वहति नवतृणाङ्कुररोमाञ्चप्रसाधितान्यङ्गानि ।

प्रावृड्लक्ष्म्या पयोधरैः परिप्रेरितो[1] विन्ध्यः ॥

कस्याश्चिन्नायिकायां स्वचैतन्यं प्रकाशयन्नागरः कामुकधर्मं विन्ध्ये समाद्धानः प्रावृषं वर्णयति । विन्ध्यनिकुञ्जं कृतसङ्केतं त्वम गतोऽहं गतेवेति पुरुषं कापि सोपालम्भं वदति वा—उव्वहइ इति । नवतृणाङ्कुरा एव रोमाञ्चास्तैः प्रसाधितानि शोभितान्यङ्गानि । विन्ध्यस्यापि कामुकसमानवर्णेन प्रावृषोऽत्यन्तकामोद्रेककारिता ध्वनिता । पयोधरौ स्तनौ[2] । पुण्यवानेव महालक्ष्म्या आलिङ्गित इति धर्मः । अचेतनोऽपि स्त्रीसहितो विकारवान् भवतीति नीतिः । स्त्रीणां परिष्वङ्गोऽचेतनानामेव व्यामोहनो न पुनः सचेतसामिति युक्तिः । गौणनायकप्रतियोगिनि रतिरूपेणैव रसप्रकर्षस्य ह्रासोऽयमिति कण्ठाभरणे[3] । इन्दीवरस्य ॥ ५७९ ॥

आम बहला वणाली मुहला जलरंकुणो जलं सिसिरं ।

अण्णणईण वि रेवाइ तह वि अण्णे गुणा के वि ॥५८०॥

आम बहला वनाली मुखरा जलरङ्कवो जलं शिशिरम् ।

अन्यनदीनामपि[4] रेवायास्तथाप्यन्ये[5] गुणाः केऽपि ॥

कस्याश्चिन्नायिकाया सखी स्वसख्यान्यतो वैलक्षण्यं सूचयन्ती कामुकमुद्दिश्य वदति—आमेति । एवमित्यर्थे आम, अनुमतौ निश्चये वा । 'आं ज्ञाननिश्चयस्मृत्यो.' इति मेदिनी[6] । जलरङ्कवः पक्षिविशेषाः । अन्यनदीनां मध्येऽपि अन्ये इव गुणाः । फलविशेष-जनकत्वेनैव नदीनां गुणागुणत्वकथन धर्मः । सर्वत्रानुभूतो गुणो विशेष जनयतीति नीतिः । परमार्थोऽनिर्वचनीय इति युक्ति । पालितस्य ॥ ५८० ॥

१. प्रति० for परि० P.

२. स्तनयित्ते for स्तनौ P.

३. P. 278.

४. अन्यनदीष्वेव for अन्यनदीनामपि P.

५. अन्ये for तथाप्यन्ये P.

६. P. 251. V. 50.

एह इमीअ णिअच्छह परिणअमालूरसच्छहे थणए ।
तुंगे सप्पुरिसमणोरहे व्व हिअए अमाअंते ॥ ५८१ ॥

एत एतस्या निरीक्षध्वं[1] परिणतमालूरसदृशौ स्तनौ ।
तुंगौ सत्पुरुषमनोरथाविव[2] हृदये अमान्तौ[3] ॥

नायिकायाः पद्मिनीत्वसूचनेन कुट्टनी कामुकान् लोभयन्ती साकूतमिदमाह— एहेति । एत आगच्छत । 'बिल्वे शाण्डिल्यशैलूषमालूरश्रीफलावपि' इत्यमरः[4] । तस्य फलं मालूरम् । यथा सत्पुरुषाणां हृदये मनोरथो न सम्माति तथेत्यर्थः । सत्पुरुषैर्मनोरथो न कार्य इति धर्मः । हृदयविसंवादेन क्रियमाणं कार्यं महतां हृदये न प्रविशतीति नीतिः । सर्वावयवास्तनावेव व्यामोहकावित्यतस्तत्सन्निधिर्मुमुक्षुणा परिहर्तव्य इति युक्तिः । पद्मिनीलक्षणम्—'स्तनयुगलमनर्घ्यश्रीफलश्रीविडम्बि' इत्यादि[5] । अनुरसाद् रस्य ॥ ५८१ ॥

हत्थाहत्थिं अहमहमिआइ वासागमम्मि मेहेहिं ।
अज्जो किं पि रहस्सं छण्णं पि णहंगणं गलइ ॥ ५८२ ॥

हस्ताहस्ति अहमहमिकया वर्षागमे मेघैः ।
अज्जो किमपि रहस्यं छन्नमपि नमोऽङ्गणं गलति ॥

कस्याश्चिन्नायिकायाः प्रोषितपतिकायाः प्रियविरहेणोपतप्तायाः वर्षास्वप्यनागतवल्लभायाः सखी सखीमुद्दिश्य वदति—हत्थाहत्थिमिति । हस्तैश्च हस्तैश्च गृहीत्वा हस्ताहस्ति । मेघैश्छन्नं परिवृतमपि नभोऽङ्गनं गलति । अहमहमिकयाऽहङ्कारेण । अज्जो आश्चर्यदुःखसूचने देशी । किमपि रहस्यमनिर्वचनीयम् । विरहिणीषु मेघोदयो न प्रकाश्यो भवतीति भावः । कापि बाला विरहिणी प्रावृडारम्भस्य कामोत्तेजनतया किमपि रहस्यं वर्णयन्ती कथं प्रियेण विना स्थातव्यमिति सूचयन्ती सखीमिदमाह वा । एवम्भूतवर्षागमे कथं गन्तुमिच्छतीति प्रियं प्रवासगमन द्वारयति वा-हस्ताहस्तीति । स्वर्धया अहमहमिकेत्यादिना मेघानाम् । वर्षाकाले दृष्टविरोधादेव तीर्थयात्रागमनं निषिद्धमिति धर्मः । आच्छादितमपि

---

१. पश्यत for निरीक्षध्वम् P.
२. ०मनोरथवत् for ०मनोरथाविव P.
३. अमान्तौ for अमान्तौ P.
४. Amara II. 4 32. Amara reads शैलूषौ for शैलूष०
५. Ratirahasya Lahore edition, P. 6, V. 11. RR reads. ०मनर्घ्य for ०मलङ्घ्य० and ०विडम्बि० for ०विलम्बि०.
६. मपि for किमपि P.

रहस्य गलत्यद सुगुप्त कार्यं कर्तव्यमिति नीति । अविद्याप्रपञ्चैरग्रमपि ज्ञानमभ्यासेन स्फुट स्यादिति युक्तिः । शालवाहनस्य ॥ ५८२ ॥

केत्तिअमेत्तं होहिइ सोहग्गं पिअअमस्स ममिरस्स ।

महिलामअणछुहाउलकडक्खविक्खेवघेप्पंतं ॥ ५८३ ॥

कियन्मात्र भविष्यति सौभाग्यं प्रियतमस्य भ्रमणशीलस्य ।

महिलामदनक्षुधाकुलकटाक्षविक्षेपगृह्यमाणम् ॥

काचित्सौभाग्यसौन्दर्यादिगुणगर्विता चलचित्त कान्तमुद्दिश्य सखीं सम्बोध्य वदति । प्रियस्यागमने किमित्युपचार न करोषि कथमस्य सौभाग्य मन्दीभूतमिति वदन्तीं सखीं नायिका सधाष्ट्र्यपालम्भमाह—केत्तिअ इति । मदनक्षुधाकुलानामातुराणा सतप्ताना वा महिलाना ये कटाक्षविक्षेपास्तैर्गृह्यमाणा सौभाग्य कियन्मात्रमधिकतर भविष्यति । ताभिरे-वाधुना विभज्यास्य सौभाग्य गृहीत किं ममोपचारेणेति भाव । कार्यान्तराकृष्टमनसोऽस्य समय एव धर्मकृत्य आदरो भवतीति धर्म । अस्थिरस्य कुत्रापि कार्यसिद्धिर्न स्यादिति नीति । स्त्रीकटाक्षाकृष्टहृदया न मुक्त्यधिकारिण इति युक्ति । नारायणस्य ॥५८३॥

णिअधणिअं उवऊहसु कुक्कुडसद्देन झत्ति पडिबुद्धो ।

परवसहिवाससंकिर णिअए वि घरम्मि मा भासु ॥५८४॥

निजगृहिणीमुपगूहस्व[2] कुक्कुटशब्देन झटिति प्रतिबुद्धा ।

परवसतिवासशङ्किन्[3] ! निजकेऽपि गृहे मा भैषी ॥

परस्त्रीनिरत निजगृहसुप्त रात्रिशेषेऽपररतिकुक्कुटशब्देन सातङ्कमबुद्ध कमपि कापि सोपालम्भमाह—णिअधणिअमिति । धणिआ निजवनिताया देशीत टीकान्तरे। धणिअ धन्य यथा स्यादेवमिति कुलपतिटीकायाम् । धन्य समीचीन दृढमिति यावत् , न भयमिति भाव । परस्य वसतौ यो वासस्तत्र शङ्किन् ! सभय ! असत्कर्माणा सदा सभया भवन्तीति धर्म । अतथ्येपि तथातथा[4] प्रत्यय कुर्वाणा उपालम्भ्या एव भवन्तीति नीति । अतिप्रसक्ति कामे वर्जनीयति युक्ति । चुल्लोहस्य ॥ ५८४ ॥

खरपवणरअगलत्थिअगिरिऊडावडणभिण्णदेहस्स ।

धुक्काधुक्कइ जीअ व विज्जुआ कालमेहस्स ॥ ५८५ ॥

---

१ विक्षेपास्तैर्गृह्य० for ०विक्षेपगृह्य० P

२. निजजायामुपगूहस्व रे for निजगृहि-णीमुपगूहस्व P

३ ० शङ्कनशील for ० शङ्किन् P.

४ यथातथा is suggested for तथातथा

खरपवनरयगलहस्तितगिरिकूटापतनभिन्नदेहस्य।

घुकघुकायते जीव इव विद्युत्कालमेघस्य॥

कामपि प्रोषितपतिकां मेघदर्शनोपतप्तां नायिकां न वर्षामेघोऽयमिति कापि सखी बोधयति—खरपवनेति। खरपवनरयेण प्रेरितश्चासौ गिरिकूटावपतनाद्भिन्नदेहश्चेति। तस्य मेघस्य। जीवमिव। विद्युत्। घुकघुकायत इव संधुक्षत इव। गलत्थल इति पाठे गलहस्तितमित्यर्थः। अन्यस्यापि भिन्नदेहस्य जीवो घुकघुकायते क्रमेण सुस्थं (स्थो) भवति। वर्षामेघकथनेन प्रियागमनेनैकत्वं ध्वनितम्। सतो विपद्गतमपि स्वामिनं न त्यजतीति धर्मः। बलीयसाभियुक्तानां विपत्तिरवश्यं भवतीति नीतिः। देहयन्त्रोऽस्थिर इति युक्तिः। जीवदेयस्य॥ ५८५॥

मेहमहिसस्स णज्जइ उअरे सुरचावकोडिभिण्णस्स।

कंदंतस्स सविअणं अंतं व पलंबए विज्जू॥ ५८६॥

मेघमहिषस्य ज्ञायते उदरे सुरचापकोटिभिन्नस्य।

क्रन्दतः सवेदनमन्त्रमिव प्रलम्बते विद्युत्॥

सुरतासक्ता काचिद्दीर्घरतार्थं प्रियस्याऽन्यचित्ततां कुर्वती वदति। प्रिययात्राविघातार्थममङ्गलं सूचयन्ती कापि निदर्शयति—मेहमहिसस्सेति। सुरचापस्य कोट्याऽग्रेण भिन्नस्य। मेघो महिष इव तस्य। सवेदनं यथा स्यादेवं क्रन्दतः विद्युदन्त्रमिव प्रलम्बत इति। नीयते ज्ञायते। पुज्जइ इति पाठे शोभते। णज्जइ इति पाठे ज्ञायते इत्येवार्थः। आपद्यपि सद्य स्वामिपरायणा भवन्तीति धर्मः। सकलजनोपकारकस्यान्त्रपतनमपि शोभत इति नीतिः। संसारिणां सर्वबन्धात् स्त्रीबन्धो दुरुच्छेदो भवतीति युक्तिः। मेघच्छायाः॥ ५८६॥

णवपल्लवं विसण्णा पहिआ पेच्छंति चूअरुक्खस्स।

कामस्स लोहिउप्पंगराइअं हत्थभल्लं व॥ ५८७॥

नवपल्लवं विषण्णाः पथिकाः पश्यन्ति चूतवृक्षस्य।

कामस्य लोहितपुंखराजितं हस्तभल्लमिव॥

---

१. ०प्रेरित० for ०गलहस्तित० P.
२. ०कूटाऽवपतन० for ०कूटापतन० P.
३. जीवमिव for जीव इव P.
४. ०कृष्ण० for ० काल० P.
५. नीयते for ज्ञायते P.
६. विदग्धाः for विषण्णाः P.
७. पतिका for पथिकाः P.
८. प्रेक्षन्ते for पश्यन्ति P.
९. लोहितोप्पंक for लोहितपुंख० P.

वसन्तसमये प्रियाविरहितं नायकमुद्दिश्य कश्चिदुत्प्रेक्ष्य वदति । वसन्तोपक्रमे प्रवासो दुःसह इति सूचयन् कश्चित् पथिकान् दर्शयति वा—रावपल्लवमिति । विज्ञोला इति, विकला इति वा । लोहितः उत्पंकः समूहीभूतः राजितश्च तत् । हस्तभल्लमिव हस्तकाण्ड इव । लोहपुंखसराइअमिति पाठे लोहपुंखं तीक्ष्णीकृतमित्यर्थः । अधुना मदनो धनुर्मदं चूतकुसुमैरेव स्वकार्यं साधयतीति भावः । स्थिरीभूय कर्म कर्तव्यमिति धर्मः । नीवावप्येवम् ॥ ५८७ ॥

**महिलाणं चिअ दोसो जेण पवासम्मि गव्विआ पुरिसा ।**
**दो तिण्णि जाव ण मरंति ता ण विरहा समप्पंति ॥ ५८८ ॥**

*महिलानामेव दोषो[1] येन प्रवासे गर्विताः[2] पुरुषाः ।*
द्वे तिस्रो यावन्न म्रियन्ते तावन्न विरहाः समाप्यन्ते ॥

यां काञ्चिद्विरहासहिष्णुः सामर्षं सखीमुद्दिश्य वदति । विरहिणीदुःखसन्धुक्षयोऽपि पुनर्गन्तुमिच्छतः प्रियस्य निवारणार्थं कापीदं वा प्राह—महिलाणं चिअ इति । महिलानां स्त्रीणां प्रवासे स्थातुं स्वयमेव शक्ता इति गर्वः । द्वे तिस्रो गतपतिका इत्यर्थम् । महान्तो दोषदर्शनादकार्ये न प्रवर्तन्त इति धर्मः । सत्पुरुषा बहूनामर्थे प्राणानिरपेक्षा भवन्तीति नीतिः । विरक्ताः स्त्रीणां दुःखे न विक्रियन्त इति युक्तिः । शेखरस्य ॥५८८॥

**बालअ ! दे वच्च लहुं मरइ वराई अलं विलंबेण ।**
**सा तुज्झ दंसणेण वि जीवेज्जइ णत्थि संदेहो ॥५८९॥**

बालक ! हे व्रज लघु म्रियते वराकी अलं विलम्बेन ।
सा तव दर्शनेनापि जीवेद्[3] यदि[3] नास्ति[4] सन्देहः ॥

कस्याश्चिन्नायिकायाः सखी स्वसख्या नवमीं दशां नायकस्य कृते निवेदयति—बालअ इति । बालक ! परवेदनानभिज्ञ ! देशब्दः सानुनयसम्बोधने । लघु शीघ्रं यथा स्यादेवम् । उत्तमैर्विपद्गतोऽवश्यं प्रतिकरणीय इति धर्मः । प्रतिकरणीयं यत्नादपि प्रतिकार्यमिति नीतिः । मृत्योर्नित्यत्वं विज्ञाय संसारे औदास्यं विधेयमिति युक्तिः । तस्यैव[5] ॥५६१॥[5] मुग्धहरिणस्य ॥५८६॥

१. P. adds म after दोषः.
२. प्रवासगर्वशीलाः for प्रवासे गर्विताः P.
३. खलु जीवत्येव for जीवेद् यदि P.
४. मात्र for नास्ति P.
५. The portion 'तस्यैव ॥५६१॥' is out of place here.

अविरेअपसरिअहुअवहजालोलिपलीविए वणामोए ।
किंसुअवणं ति कलिऊण मुद्धहरिणो ण णिक्कमइ ॥५९०॥

अविरतप्रसृ[2]तहुतवहज्वालावलि[3]प्रदीपिते[4] वनाभोगे ।
किंशुकवनमिति कलयित्वा मुग्धहरिणो न निष्क्रामति ॥

वननिकुञ्जे सुरतासक्ता काचिद्धीरमणार्थं प्रियस्य रसान्तरासक्तचित्तता वदतीति । हरिणस्य दुःखभाक्त्वस्य कश्चित्कृपापरो वा इदमाह—अभिसारस्थानदाहेन दुःखिता कुलटा जारमन्यापदेशेन वा श्रावयति—अविरलेति । अविरल प्रसृतो विस्तृतो यो हुतवहो वह्निस्तस्य ज्वालानां या आवली परम्परा तया प्रदीपिते वनाभोगे । कलयित्वाऽवद्धिर्भावाद्वनतो हरिणाना मुग्धत्वम् अज्ञत्वम् । तम्बिरपलरिअ इति पाठान्तरम् । शाल्मलीतूलमिति भट्टराघवचैतन्ययोष्टीकाया देशीति व्याख्यातम् । विपद्गत प्रतिकर्तुमसमर्थो दयापरोऽनुतापमेव करोतीति धर्मं । अपायबहुलमपि निज स्थान न त्याज्यम् । सोपद्रवापि सुभगा खलु जन्मभूमिरिति नीति । मुग्धत्व सहृदु खसुखा भवन्तीति युक्ति । सारस्य ॥ ५९० ॥

णिहुअणसिप्पं तह सारिआइ उल्लाविअं म्ह गुरुपुरओ ।
जह तं वेलं माए ण आणिमो कत्थ वच्चामो ॥ ५९१ ॥

निधुवनशिल्प तथा [5]शारिकयोल्लपितमस्माकं गुरुपुरतः ।
यथा ता वेलां[6] मातर्न आनीमः[7] कुत्र व्रजाम[8] ॥

कापि कलाभिज्ञा स्त्री रात्रौ सुरतसमये सुरतव्युत्पत्तीं दर्शयन्ती यस्मिन् गृहसारिकयोल्लपित तस्या श्वश्र्वाग्रमग्रे लज्जमानाऽन्यत्र गत्वा सख्या कथयन्ती वदति—णिहुअणसिप्पमिति । निधुवनं सुरतम् । शिल्प व्युत्पत्तिम् । उल्लपित प्रकाशितम् । योषिता सतीना लज्जैव भूषणमिति धर्मं । गुरोर्निकटे धार्ष्ट्य न विधेयमिति नीतिः । ससारे लज्जादिरवधेयो निरवमिति तद्धानाय यतनीयमिति युक्तिः । तस्यैव ॥ ५९१ ॥

पच्चग्गुप्फुल्लदलुल्लसंतमअरंदपाणलेहलओ ।
तं णत्थि कुंदकलिआइ जं ण भमरो महइ काउं ॥५९२॥

---

१. 'तम्बिर ( =ताम्र ) for अविरअ Weber.
२. अविरलप्रसूत० for अविरतप्रसृत० P
३ ०वली० for ०वलि० P.
४ ०दीपितवना० for ०दीपिते वना० P.
५. सारि० for शारि० P.
६ तस्या वेलायाम् for ता वेलाम् P.
७. जानामि for आनीम: P.
८. प्रजामि for व्रजाम: P.

प्रत्यग्रोत्फुल्लदलोल्लसन्मकरन्दपानलोलुपः[2] ।
तन्नास्ति कुन्दकलिकाया यन्न भ्रमरो महति[3] कर्तुम् ॥

नवोढामत्यन्तकोमलाङ्गीं कामपि स्त्रियं सर्वप्रकारेण यथेच्छरमणार्थं कमपि पुरुषमन्यापदेशेन लक्ष्यीकृत्य कस्याश्चित्कृते कापि कथयति । कस्याश्चिन्नवयौवनायाः सौभाग्यं सखी व्याजाद्वर्णयति वा—पश्चग्गेति । प्रत्यग्रमभिनवं यद्वेल्लद्विकसद्दलं तत्रोल्लसन् विकसन् यो मकरन्दः पुष्परसस्तस्य पाने लोभिष्ठो महत्यभिलषति । स्त्रीवल्यौ लते । खिड्गषट्पदौ भ्रमरौ । अभीष्टस्य पुरुषस्य सिद्धयै बहुतर उपचारः कार्य इति धर्मः । अल्पजीविना सेव्ये बहुकार्ये साध्येऽनेक उपचारः कार्य इति नीतिः । तत्त्वज्ञो लोकस्यादरविषयो भवतीति युक्तिः । तस्यैव ॥ ५९२ ॥

सो को वि गुणाइसओ ण आणिमो मामि ! कुंदलइआए ।
अच्छीहिं चिअ पाउं अहिलस्सइ जेण भमरेहिं ॥५९३॥

स कोऽपि गुणातिशयो न जानीमो मातुलानि[4] ! कुन्दलतिकायाः ।
अक्षिभ्यामेव पातुमभिलष्यते येन भ्रमरैः[5] ॥

कामपि सकलगुणोपेतां चक्षूरागादियुक्तामखिलपुरुषाभष्टामन्यापदेशेन कस्याः कृते कापि वदति । नायिकाया गुणातिशयं वर्णयति—सो को वीति । कोऽप्यनिर्वचनीयः । लते प्रततिवनिते । भ्रमरौ खिड्गषट्पदौ । गुणातिशयेनात्मा उत्कर्षणीय इति धर्मः । गुणविशेषो बहूनां वल्लभतां करोतीति नीतिः । तत्त्वज्ञो लोकस्यादरविषयो भवतीति युक्तिः । कुमारस्य ॥ ५९३ ॥

एक्क चिअ रुअगुणं गामणिघूआ समुव्वहइ ।
अणिमिसणअणो सअलो जीए देवीकओ गामो ॥५९४॥

एकैव रूपगुणं ग्रामणीदुहिता[6] समुद्वहति ।
अनिमिषनयनः सकलो यया देवीकृतो ग्रामः ॥

कयाचिद् गृहपतिसुतया कस्यचिन्नायकस्य सखी दूती प्रहिता सा च तेन नायकेन पृष्टा कीदृशं तस्या रूपमिति नायकस्य कृते वदति । नायकस्य महिलान्तरवर्णनप्रसङ्गमाना

---

१. ०व्वेल्लद्दोल्लन्म० for ०त्फुल्लदलोल्लसन्म ० P.
२. ० लम्पटः for ० लोलुपः P.
३. वाञ्छति for महति K.
४. मातुलि for मातुलानि P.
५. भ्रमरेण for भ्रमरैः P.
६. एकैव दुहिता गृहपतेर्महिलात्वं for एकैव रूपगुणं ग्रामणीदुहिता P.

दूती गृहपतेर्दुहितुः सौन्दर्यं वा वर्णयति—एक्क चिअ इति । एका श्रेष्ठा । महिलात्वम् असाधारणश्रीधर्मवत्त्वं स च धर्मो रूपादिः । अदेव एव देवः सुरः कृतः । अभूततद्भावे च्विः । तद्ग्रामो ग्रामस्थो जनः । यत्र धार्मिकः प्रतिवसति तत्रस्थो जनोऽपि धर्मपरायणो भवतीति धर्मः । गुणातिशयो बहूनां विस्मयमादधात्येवेति नीतिः । वनिता च्चात्यन्तमाकर्षिका ततस्तत्सन्निधानं योगिना वर्ज्यमिति युक्तिः । कण्ठाभरणे प्रेमप्रकारेषु निर्द्धारितव्यक्तिविशेषवानयमिति । अनङ्गस्य ॥ ५६४ ॥

मण्णे आसाओ चिअ ण पाविओ पिअअमाहररसस्स ।
तिअसेहि जेण रअणाअराहि अमअं समुद्धरिअं ॥ ५९५ ॥

मन्ये आस्वाद एव न प्राप्तः प्रियतमाधररसस्य ।
त्रिदशैर्येन रत्नाकरादमृतं समुद्धृतम् ॥

कामिगोष्ठ्यां प्रियतमाधररसस्यामृतादप्युत्तमां[2] ख्यापयन् कश्चित्कस्यापि शृते वदति—मण्णे इति । मन्ये उत्प्रेक्षायाम् । अमृतादप्यधरः[3] इति धर्मः । निक[4]... हितलाभे दूरं न गन्तव्यम् । तदुक्तम्—'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्' इति नीतिः । वनिताधररसेनाकृष्टा अमृतमप्यवधीरयन्ति, ततः संसारस्त्याज्य इति युक्तिः । तस्यैव ॥ ५६५ ॥

आअण्णाअड्ढिअणिसिअभल्लमम्माहआइ हरिणीए ।
अदंसणो पिओ होहिइ त्ति वलिउं चिरं दिट्ठो ॥ ५९६ ॥

आकर्णाकृष्टनिशितभल्लमर्माहतया हरिण्या ।
अदर्शनः प्रियो भविष्यतीति वलित्वा चिरं दृष्टः ॥

प्रियेण सह काचित्सङ्केतस्थानमागता शरभिन्नां हरिणीं दृष्ट्वा तच्चेष्टया कान्तं रसान्तरासक्तं कर्तुं वदति । हरिणीचरितवर्णनेन स्त्रीणां दृढसौहार्दं वा कापि वर्णयति-आअण्णेति । न विद्यते दर्शनं यस्यासौ प्रियः । वलित्वा व्याघुट्य । पशुजातीयाना-मप्येवं रसावेशः किं पुनः सचेतसामिति भावः । सत्यो वरमात्ममरणं समीहन्ते ननु

१. रस is missing in P.
२. उत्तमताम् is suggested for उत्तमाम् P.
३. उत्तमः seems to be missing here.
४. A few syllables are missing here. निकट is suggested for निक.
५. ०वर्णने for आकृष्ट० P.

पत्युरिति धर्मः । सत्यामपि विपत्तौ परोपकारः कर्तव्य इति नीतिः । प्रायो यात्यन्यनुसरला सुखिभाजो भवन्तीति युक्तिः । पोटिसस्य ॥ ५९६ ॥

विसमट्ठिअपक्केक्कंबदंसणे तुज्झ सत्तुघरिणीअ ।
को को ण पत्थिओ पहिआणं डिंभे रुअंतम्मि ॥५९७॥

विषमस्थितपक्वैकाम्रदर्शने तव शत्रुगृहिण्या ।
कः को न प्रार्थितः पथिकानां डिम्भे[1] रुदति ॥

कस्यापि राज्ञः सौन्दर्यवती कापि सेवाकुशला स्त्री राजानमुद्दिश्य वदति—विसमेति । विषमे दुर्गे स्थलेस्थितमाम्रफलं तत्प्राप्त्यै प्रार्थितः, पथिकानां मध्ये सर्व एव प्रार्थित इत्यर्थः । एवं हि तासां भवत्प्रतापादभिवेशो वृत्त इति भावः । अधर्मादेवं भवत्यतो धर्म आचरणीय इति धर्मः । कुटुम्बं सति स्थाने निवेश्य युद्धादि विधेयमिति नीतिः । बाह्यं सुखमनित्यमिति युक्तिः । भीमस्वामिनः ॥ ५९७ ॥

मालारी ललिउल्लुलिअबाहुमूलेहि तरुणहिअआइं ।
उल्लुरइ सज्झुल्लूरिआइ कुसुमाइ दावेंती ॥ ५९८ ॥

मालाकारी ललितोल्ललितबाहुमूलाभ्यां तरुणहृदयानि ।
उल्लुनाति सद्योऽवलूनानि[2] कुसुमानि दर्शयन्ती ॥

कश्चिन्मालाकारिकायाः सौन्दर्येणाकृष्टहृदय इदमाह—मालारीति—मालाकारी तरुणहृदयानि ललितं सुन्दरमुल्ललितमुत्तोलितं यद् बाहुमूलं ताभ्याम् । उल्लुनाति लुण्ठयत्यपहरति । सज्झ साजीति ख्याता । सज्झी देशी । देवार्थं कुसुमावचयो धर्मावह इति धर्मः । सौन्दर्यं न जातिविशेषमपेक्षत इति नीतिः । अनित्यं वनितादि त्याज्यमिति युक्तिः । शालवाहनस्य ॥ ५९८ ॥

मालारीए वेल्लहलबाहुमूलावलोअणसअण्हो ।
अलिअं पि भमइ कुसुमग्घपुच्छिरो पंसुलजुआणो ॥५९९॥

मालाकार्याः सुन्दरबाहुमूलावलोकनसतृष्णः ।
अलीकमपि[4] भ्रमति कुसुमार्घप्रश्नशीलः पांसुलयुवा ॥

कामपि रूपादिमतीं मालाकारस्त्रियं पश्यन् कोऽपि लम्पटः पुरुषः कयाचिद्

---

१. बालके for डिम्भे P.
२. सज्जीस्थापितानि for सद्योऽवलूनानि P.
३. वेल्लहल॰ for सुन्दर॰ P.
४. अलीकम् for अलीकमपि P.
५. पांशुल॰ for पांसुल॰ P

दृष्ट:, सापत्न्या. कथयति—मालाश्रारीति । वेल्लहल्लां सुन्दरे देशी । अलीकं क्रयं विनापि । अर्घो मूल्यम् । पांशुलः परस्त्रीलम्पटः । यूना कर्मधारयः । 'अर्घः पूजाविधौ मूल्ये''[1] । वीरक्रयेण मूल्यं दत्त्वा क्रेतव्यं नतु मूल्यादि प्रष्टव्यमिति धर्मः । सुहाश्लेष्टा-विशेषेणाशयमाकलयन्तीति नीतिः । सांसारिकरसाकृष्टो मुक्तावनधिकारीति युक्ति' । तस्यैव ॥ ५९९ ॥

षष्ठं शतं समाप्यते मनोहरालापरचनरमणीयम् ।
सातिशयं सप्तशत्यां कोपे कविहृदयदयितायाम्[2] ॥६००॥

षष्ठगाथाशतान्तगाथामाह—षष्ठं सत्रमिति । मनोहरो य आलापस्तस्य यद्रचनं करणं तेन रमणीयम् । शतम् । सातिशयम् उत्कृष्टम् । सप्तशत्यां कोपे । कोपरूपे काव्य इति ॥ ६०० ॥

इति हारिताम्रश्रीपीताम्बरकृतायां सप्तशत्याष्टीकायां षष्ठं शतम् ॥

पच्चूसागअ ! रंजिअदेह ! पिआलोअ ! लोअणाणंद !
अण्णत्तखविअसव्वरि ! णहभूसण ! दिणवइ ! णमो दे ॥६०१॥

प्रत्युपागत ! [3]रक्तदेह ! प्रियालोक[4] ! लोचनानन्द !
अन्यत्रक्षपितशर्वरीक ! नभोभूषण ! दिनपते ! नमस्ते ॥

सप्तशतोपक्रमे मङ्गलात्मिकां गाथामाह—पच्चूसागअ इति । अनुरक्तो लोहितः । अन्यत्र लोहितालोकपार्श्वे सूर्यनमस्कारेण स्फुट एव । अथ च काचित्सुभाषिणी सकलाभिज्ञा खण्डिता नायिका प्रभातागतकामिनीकरजक्षताङ्कितनुं पतिमालोक्य तमुपालभमाना वदति तत्र कुङ्कुमादिलोहितदेह! श्रीलोचनानन्द! नखभूषण! अन्यस्त्रीस्थाने क्षपितशर्वरीक! दिनपते! रात्रावन्यस्याः पतिस्त्वं दिने मदीय रात्रावन्यस्त्रीकेडया स्थित्वा प्रत्यूषे उपागतनमस्ते नमस्करणीयोऽस्माकम्, भगवतः सूर्यस्य साधर्म्यमुपागतोऽसि यत इति काम. । यथा सर्वेषां श्लाघ्यो भवति तथा कर्तव्यमिति नीतिः । रात्रौ योग-बलेन आनन्दस्य ब्रह्मणः साक्षात्कारो विधेय इति युक्तिः । शालवाहनस्य ॥ ६०१ ॥

अकअण्णुअ ! घणवण्णं घणवण्णंतरिअतरणिअरपिअरं ।
जइ रे रे वाणीरं रेवाणीरं पि णो भरसि ! ॥ ६०२ ॥

---

१. Medini P. 34. V. 2.
२. This verse is peculiar to Pitāmbara's text and is not found anywhere else.
३. P. adds अनु before रक्त.
४. त्रैलोक्य for प्रियालोक P.

अकृतज्ञ[1] ! घनवर्षा घनवर्णा[2]न्तरिततरणिकरनिकरम् ।
यदि रे रे वानीरं रेवानीरमपि नो स्मरसि ॥

कापि कस्मिन् प्रथमानुरक्ता तेन च समं रमिता तस्यामनन्तरं स च शिथिलादरो वृत्तः । सा तं प्रत्यासत्त्या साक्षेपं सोपालम्भं च प्राह—अकृतज्ञेत्यत्र इति । रे रे साक्षेपसम्बोधने । यदि वानीरं वंजुलं वेश इति ख्यातं कृतसङ्केतस्थानं न स्मरसि तदा रेवाया नर्मदाया अपि नीरं जलं न स्मरसीत्यन्वयः । घनो मेघस्तद्वर्षा रेवानीरम् । घनं निबिडं यत्पर्णा तेनान्तरितो व्यवहितस्तरणेः सूर्यस्य करस्य किरणस्य निकरः समूहो येन तं वानीरम् । रजनिकरनिकरेति पाठान्तरम् , तत्र रजनीकरश्चन्द्रः । अकृतज्ञतानिन्दता न कार्येति धर्मः । श्रमस्य स्मरणे कृतायासानां मनोदुःखं भवतीति नीतिः । कामिनीस्मरणं मनसो विकाराय भवतीति युक्तिः । मकरन्दसेनस्य ॥ ६०२ ॥

मंदं पि ण आणइ हलिअणंदणो इह हि डड्ढगामम्मि ।
गहवइसुआ विवज्जइ अवेज्जए कस्स काहेमो ? ॥ ६०३ ॥

मन्दम[3]पि न जानाति[4] हलिकनन्दन इह हि[6] दग्धग्रामे ।
गृहपतिसुता विपद्यते[7]ऽवैद्यके[8] कस्य कथयामः ॥

जारसङ्गमनाय नगरगमनाभिज्ञापिकया: कस्याश्चिद्विदिताभिप्राया सखी सोद्वेगमाह—मंतमपीति । मन्त्रं मन्त्रणां न जानाति । मन्दमिति पाठे मन्दमल्पं किमपि न जानातीत्यर्थः । कोपीत्यत्र इह हीति पाठे ग्राम इत्यस्य विशेषणम् । सवैद्यके नगरेऽपि तद्गृहे नीयतामिति भाव । कापि गृहस्थसुता शङ्कया कलुषिता वृत्ता हालिकसुतानुरक्ता च । तथाविधां दृष्ट्वा काचिद्धालिकपुत्रमुपालभते वा । अवैद्यके स्थाने न वस्तव्यम् । तदुक्तम्—

घनिकः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः ।
पञ्च यत्र न विद्यन्ते तत्र वासं न कारयेत् ॥

इति धर्मः[9] ॥ ६०३ ॥

---

१. अ is missing in P.
२. ०पर्णा० for ०वर्णा० P.
३ मन्त्र० for मन्द० P.
४. P. adds हि after जानाति.
५. ड्ढा० for ढ० P.
६. कोऽपि for इह हि P.
७. विद्यते for विपद्यते P.
८. ०विद्यके for ०वैद्यके P.
९. Pitāmbara does not explain this stanza in relation to नीति and युक्ति. Perhaps this explanatory portion has escaped the scribe's ken.

एक्कक्कमपरिरक्खणपहारसमुहे कुरंगमिहुणम्मि ।
वाहेण मण्णुविअलंतवाहधोअं धणुं मुक्कं ॥ ६०४ ॥

एकक्रमपरिरक्षणप्रहारसमुखे[1] कुरङ्गमिथुने ।
व्याधेन मन्युविगलद्बाष्पधौतं धनुर्मुक्तम् ॥

एककमेति । एकैकं परस्परं यः क्रमस्तेन परिरक्षणं यत्र प्रहारे तत्र सम्मुखे कुरङ्गमिथुने सति। व्याधेन मन्युना करुणया विगलद्बाष्पेण धौतं च धनुर्मुक्तम्। मृगाय प्रहारे क्रियमाणे मृगी अन्तरयति,तस्यां च तत्र क्रियमाणे सोऽन्तरयतीति न्यग्जातीयानामप्येवं स्नेहे भवता कान्तेन सचेतसापि कथमौदास्यमेव लभ्यत इति भावः। अन्योन्यानुरागप्रयुक्तं दाम्पत्यमुभयलोकसाधनमिति धर्मः। उपचारविशेषेण हिंसकस्यापि मनः प्रत्येतीति नीतिः। दयालुः सर्वत्रैवाधिकारी भवतीति युक्तिः। चुल्लोदस्य ॥६०४॥

ता सुहअ ! विलंब खणं भणामि कीअ वि कएण अलमहवा ।
अविआरिअकज्जारंभआरिणी मरउ ण भणिस्सं ॥ ६०५ ॥

तत्सुभग ! विलम्बस्व[4] क्षणं भणामि कस्या अपि कृते नालमथवा ।
अविचारितकार्यारम्भकारिणी म्रियतां न भणिष्यामि[5] ॥

कापि कस्मिन् जातानुरागा तस्यां स च मन्दादरस्तेन सा विह्वला वर्तते उदासीनं तं वदति । कापि निसृष्टार्था दूती नायिकाया नवमीं कामदशां सूचयन्ती नायकं सोपालम्भं वा प्राह—ता सुहअ इति। अभ्यर्थनामङ्गभयादलं निष्फलं वा भाषणम्। व्यामोहातिशयादविचारितकार्यारम्भकारिणी । स्त्रीवधोऽनिगर्हितो न कार्य इति धर्मः। अविचारितकार्यप्रवर्तनपराः सदा दुःखमनुभवन्तीति नीतिः । अविचारितसुन्दर एव संसार इति युक्तिः। तस्यैव ॥ ६०५ ॥

*भोइणिदिण्णपहेणअचक्खिअदुस्सिक्खिओ हलिअउत्तो ।*
एत्ताहे अण्णपहेणआण छीवोल्लअं देइ ॥ ६०६ ॥

भोगिनीदत्तप्रहेणकास्वादनदुश्शिक्षितो [6]हलिकपुत्रः ।
इदानीमन्यप्रहेणकानां स्पर्शोल्लापं ददाति ॥

---

१. एकैक० for एक० P.
२. प्रति० for परि० P.
३. ०सम्मुखे for ०समुखे P.
४. स्व is missing in P.
५. भविष्ये for भणिष्यामि P.
६. छित्वोल्लअं for छीवोल्लअं P.
७. का is missing in P.
८. हा० for ह० P.

कापि भोगिनी पर्वदिने पुरुषाय वायनकं प्रहितवती । अन्याभिरप्युत्तमेन वस्तुना चास्मै वायनकं प्रहितम् । भोगिनीप्रहितं च स्वादिष्टमाकलय्यान्यत्रायनकानां कृते वैरस्यं विभावितमिति काप्यपरस्याः कथयति । कापि पत्यौ ग्रामप्रधानवनिताया अनुरागमन्यापदेशेन सूचयन्ती सेर्ष्यं सखीमिदमाह—भोइणि इति । स्वश्लाघां निन्दावचनमिति भट्टटीका । छित्वोल्लभ्यं मुखविद्धनयो विज्ञानविशेष इति टीकान्तरे । विलम्भमानपिष्टकृताम्पूराशे पहेयाश्चं देशी । प्रजादावश्यं वायनकं विलम्भनीयमिति धर्मः । परेषां निन्दा न कार्येति नीतिः । योगिनां कान्दर्पिकद्रव्योपयोगा निषिद्धा इति युक्तिः । तस्यैव ॥ ६०६ ॥

पच्चूसमऊहावलिपरिमलणसमूससंतवत्ताणं ।
कमलाण रअणिविरमे जिअलोअसिरी महम्महइ ॥६०७॥

प्रत्यूषमयूखावलिपरिमलनसमुच्छ्वसत्पत्त्राणाम् ।
कमलानां रजनीविरामे जितस्लोकश्रीर्महमहायते[3] ॥

निभृतदेशं कमलवनं सङ्केतस्थानमहं गता त्वं न गत इति पुरुषं काप्यन्यापदेशेन बोधयन्ती वदति । वासगृहे प्रियेण सह क्रीडाभरेणाविदितप्रभातां बोधयन्ती का सखीदमाह—पच्चूसेति । प्रत्यूषमयूखावलिपरिमलनेन सम्बन्धेन समुल्लसत् पत्रं येषां तेषां कमलानां रजनीवि[4] आमोदश्रीर्महमहायते । कमलानामामोदश्रीः सौरभसम्पत् महमहायते प्रसारिणी भवतीत्यन्वयः । प्रत्यूषोऽहर्मुखं तत्र या मयूखावलिस्तस्याः परिमलनेन सम्बन्धेन समुल्लसन् पत्रं येषां तेषां कमलानाम् । जिअलोअसिरीति पाठे जीवलोकानां प्राणिनां श्रीर्जन्मफलं सम्पद् वा प्रसारिणी भवतीत्यन्वयः । पच्चूसः सूर्ये देशीति भट्टभोजराजटीकयोर्व्याख्यानम् । सन्ध्याद्युपासनाय कश्चिच्छिष्यं प्रातर्बोधयतीति धर्मः । कस्मिन्नपि काले कस्याप्युद्भवो भवतीति नीतिः । हृत्कमलविकाशे जीवितसाफल्यमिति युक्तिः । दुर्लभराजस्य ॥ ६०७ ॥

वाउव्वेल्लिअसाहुलि ! थएसु फुडदंतमंडलं जहणं ।
चडुआरअं पइं मा हु पुत्ति ! जणहासिअं कुणसु ॥६०८॥

---

१. The word is ambiguous.
२. विलभनीयम् for विलम्भनीयम् P.
३. This verse is missing in P.
४. रजनीविरामे is suggested for रजनीवि P.

वातोद्वेलितवस्त्रे [1] स्थगय स्फुटदन्तमण्डलं जघनम् ।
चटुकारकं पतिं मा खलु [2] पुत्रि ! जनहासितं [3] कुरु [4] ॥

कस्याश्चित्पवनक्षिप्तोरुदेशाया ऊरुदेशे दन्तमण्डलचिह्नितं दृष्ट्वा काचिद्वितीर्णविपक्षी प्रतिविन्ना तामुद्दिश्य वदति—वाउव्वेलिअ इति । स्थगय आवृणु । साङ्गुलि वस्त्राञ्चले देशी । तत्कृतं दन्तक्षतं जघने दृष्ट्वा तव पत्युरुपहासं करिष्यन्ति जना इति भावः । साध्व्या पत्युर्बहुमानं लोके रक्षणीयमिति धर्मः । रहस्यं यत्नेन गोपनीयमिति नीतिः । योगिनो रतादि लोकस्य प्रहासमिव मन्यन्त इति युक्तिः । शालवाहनस्य ॥६०८॥

वीसत्थहसिअपरिसक्किआण पढमं जलंजली दिण्णो ।
पच्छा वहूअ गहिओ कुडंबभारो णिमज्जंतो ॥ ६०९ ॥

विस्त्रब्धहसितपरिक्रमाया प्रथमं जलाञ्जलिर्दत्तः [5] ।
पश्चाद्वध्वा गृहीतः कुटुम्बभारो [6] निमज्जन् ॥

कस्याश्चिद्वध्वा प्रथमं चलचित्तायाश्चरितमेकस्या कथयति—वीसत्थेति । विश्वस्तेत्यादीनां त्यागपूर्वकं कुटुम्बरक्षणादिभावं तया कृत इत्यर्थः । निमज्जन् चैयप गच्छन् उद्धृत इत्यर्थः । वध्वा असाध्यत्वं वा दूती प्रतिपादयति । कुटुम्बरक्षणपोषणायैव पुण्यहेतुरिति धर्मः । प्रधानविरुद्धचेष्टायां वधूवर्गो निप्लुत एव भवतीति नीतिः । परिहासबहुले संसारे निमग्नेन न [7] भवितव्यमिति युक्तिः । तस्यैव ॥६०९॥

गम्मिहिसि तस्स पासं सुंदरि ! मा तुरअ वड्ढउ मिअंको ।
दुद्धे दुद्धं मिअ चंदिआइ को पेच्छइ मुहं दे ॥ ६१० ॥

गमिष्यसि तस्य पार्श्वं सुन्दरि ! मा त्वरस्व वर्धतां मृगाङ्कः ।
दुग्धे दुग्धमिव चन्द्रिकाया कः प्रेक्षते मुखं ते ॥

काचित्सर्वगुणोपेता नायकस्थानं प्रदोषे जिगमिषुः सख्या निषिध्यते । चन्द्रप्रदोषाभिसारिका सानुनयं वा कापि प्राह—गम्मिहिसीति । वर्द्धतां परिपूर्णो यातु हीनतेजा भवतु इति द्वितीयाभासार्थः । अभिसारिकेयम् । तदुक्तम्—

या निर्लज्जा कृता बाढं मदेन मदनेन वा ।
अभियाति प्रियं साभिसारिकाभिमता यथा ॥ इति ॥

---

१ ०वस्त्राञ्चले for ०वस्त्रे P
२ खलु is missing in P
३ ०हास्य for ०हासितं K
४ कुरुष्व for कुरु P
५ ०ञ्जलिं दत्त for ०ञ्जलिर्दत्त P
६ नि is missing in P
७ 'न' is supplied by the Editor.

कर्तव्ये कर्मणि त्वरा न कर्तव्येति धर्मः। समानगुणरूपो दुर्लभ्यः स्यादिति नीतिः। प्रकृतौ दुग्धे दुग्धमिवात्मश्लिष्टो (०श्लेषो) दुरधिगम इति युक्तिः। महिपासुरस्य ॥६१०॥

जइ जूरइ जूरउ णाम मामि ! परलोअवसणिओ लोओ।
तह वि बला गामणिणंदणस्स वअणे वलइ दिट्ठी ॥ ६११ ॥

यदि खिद्यते[1] खिद्यतां[2] नाम मातुलानि ![3] परलोकव्यसनिको[4] लोकः।
तथापि बलाद् ग्रामणीनन्दनस्य वदने वलते दृष्टिः ॥

काचिद् ग्राममुख्यसुतानुरक्ता हितैषिण्या वारं वारं निषिद्धा सती वदति—जइ इति। परेषां व्यसनेन निर्वृत सुखितः। स्नेह एव तादृशस्तेन समुत्पन्नो येन बलादेव दृष्टिस्तस्मिन् वलते तदत्र किं करोमीति भावः। कापि ग्रामपात्रपुत्रं प्रति सानुरागा समानसुखदृष्टया मातुलीं वा प्राह। खिद्यति क्रुध्यतीति विज्ञानं भट्टीकायाम्। धर्मनिरपेक्षा स्त्री धर्मं न काङ्क्षतीति तद्धर्मः। अनुरागपराधीनानां लोकापेक्षा न भवतीति नीतिः। परलोकव्यसनितया मुक्तिर्न भवतीति युक्तिः। पोटिसस्य ॥६११॥

गेहं व वित्तरहिअं णिज्झरकुहरं व सलिलसुण्णइअं।
गोहणरहिअं गोट्ठं व तीअ वअणं तुह विओए ॥ ६१२ ॥

*गेहमिव वित्तरहितं निर्झरकुहरमिव सलिलशून्यीकृतम्।*
गोधनरहितं गोष्ठमिव तस्या वदनं तव वियोगे ॥

कस्याश्चिदनुरागातिशयं कस्यचित्पुरुषस्य कृते कापि सखी वदति—गेहमिति। निर्झरयोग्यं निर्झरकुहरम्। सत्या पतिविच्छेदे प्रसाधनादिकं न कर्तव्यमिति धर्मः। शोभासम्पादकं वस्तु मनो हर्षयतीति नीतिः। गृहादिशोभा सर्वत्रैवानित्येति युक्तिः। पालितस्य ॥ ६१२ ॥

तुह दंसणेण जणिओ इमीअ लज्जाउलाइ अणुराओ।
दुग्गअमणोरहो विअ हिअअ च्चिअ जाइ परिणामं ॥६१३॥

तव दर्शनेन जनितोऽस्या लज्जालुकाया[5] अनुरागः।
दुर्गतमनोरथ इव हृदय एव याति परिणामम् ॥

कस्याश्चिल्लज्जापरवशायाः स्वयमाशाविष्करणासमर्थाया अनुरागं सूचयन्ती दूती-

१. खिद्यति for खिद्यते P.
२. खिद्यतु for खिद्यतां P.
३. मातुलि for मातुलानि P.
४. परलोकस्य for परलोक० P.
५. ०व्यसननिर्वृतो for ०व्यसनिको P.
६. ०लोरनु० for ०लुकाया अनु० P.

ध्माह—तुह दंसणेति । यथा दुर्गतानां दरिद्राणां मनोरथो हृदय एव फलसम्पत्त्यभावात् परिणामं विलयं याति तथाऽस्या अनुराग इत्यर्थः । अर्थो हि सकलपुरुषार्थ इति धर्मः । उपायं विनाऽभीष्टसिद्धिर्न भवतीति नीतिः । सुखदुःखयोर्हृदयमेव प्रमाणमिति युक्तिः । पूर्वगाथायाः अप्रावसानम् । चन्द्रोद्वस्य ॥ ६१३ ॥

जं तणुआअइ सा तुह कएण किं जेण पुच्छसि हसंतो ।

अह गिम्हे मह पअई एव्वं भणिऊण ओरुण्णा ॥ ६१४ ॥

या तनुकायते सा तव कृतेन किं येन पृच्छसि हसन् ।

अथ ग्रीष्मे मम प्रकृतिरेवं भणित्वावरुदिता ॥

प्रवासादागतेन प्रियेण पृष्टदौर्बल्यकारणाया निसर्गस्नेहं मुग्धात्वं च वर्णयन्ती सखी सख्यन्तरे कथयति— जं तणुआअइ इति । तनुकायते तन्वी कृशा भवति । कृतेन हेतुना । रुदो दुःखसूचने । रतिसम्प्रयोगे मिथ्यावादोऽधर्महेतुर्न भवतीति धर्मः । क्लेश-कर्तुरुपहासे सन्तापः स्यादिति नीतिः । देहदौर्बल्येन परमार्थज्ञानिर्न भवतीति युक्तिः । भीमस्वामिनः ॥ ६१४ ॥

वण्णक्कमरहिअस्स वि एस गुणो णवरि चित्तकम्मस्स ।

णिमिसं पि जं ण मुंचइ पिओ जणो गाढमुवऊढो ॥६१५॥

वर्णक्रमरहितस्याप्येष गुणः[4] केवलं चित्रकर्मणः ।

निमिषमपि[5] यन्न मुञ्चति[6] प्रियो[7] जनो गाढमुपगूढः[8] ॥

काचिद्विदग्धा गृहिणी विरहासहिष्णुरनुरागातिशयीभूतस्य पुरुषस्य प्रकृति-मात्मालिङ्गितां पटलिखितां दृष्ट्वाऽऽत्मविनोदनं कुर्वती कामपि सखीकृत्य वदति । द्विजादिवर्णहीनगमनाज्जुगुप्सन्ती मातुलीं नवानुरक्ता चित्रव्याजेन प्रियस्यात्मा-धीनतां सूचयन्ती प्रियेण सहाविरतमालिङ्गनमिच्छन्ती वा चित्रव्याजेन दर्शयति— वण्णक्कमेति । वर्णो हरितालादिजन्यस्तत्क्रमरहितस्यापि चित्रकर्मण आलेख्यक्रियायाः केवलं नैष गुणः, किन्तु तस्यैव स गुणो यदुपगूढः स एव प्रियो न मुच्यत इति । उपगूहनसुखाभिलाषिण्य. स्त्रियो हीनवर्णमपि पुरुषमभिलषन्तीत्यतो नित्यमेव स्त्रियो

---

१. Missing in P.

२. ०रेतादृशी for ०रेवं P

३. 'व' is missing in P.

४. P. adds 'न' after गुणः.

५. निमेष० for निमिष०

६. मुच्यते for मुञ्चति P.

७. प्रिया for प्रियो P.

८. गाढोप० for गाढमुप०

रक्षणीया इति धर्मः । अनेकगुणाभावेऽपि विशिष्टो गुणो रञ्जको भवतीति नीतिः। एक-चित्तेन यदभ्यस्यते तत्सर्वमेव साधु भवतीति युक्तिः । तस्यैव ॥६१५॥

अविहत्तसंधिबंधं पढमरसुब्भेअपाणलोहिल्लो ।
उव्वेलिउं ण आणइ खंडइ कलिआमुहं भमरो ॥६१६॥

अविभक्तसन्धिबन्धं[1] प्रथमरसोद्भेदपानलोभितः ।
उद्वेल्लितुं न जानाति खण्डयति कलिकामुखं भ्रमरः ॥

काञ्चित्कोमलाङ्गीमेव नवोढां रमयन् कश्चिन्नायकः कयाचिदन्यापदेशेन कमप्युद्दिश्योच्यते । बाला सुरताभिज्ञं दुर्विदग्धमुपहसन्ती कमपि व्याजादिदमाह—अविहत्तेति । अमुञ्चन् अत्यजन् सन्धिः सन्धनं संयोगभेदस्तस्य बन्धो यस्य तत्कलिकामुखम् । अविभक्तेति पाठान्तरम् । प्रथमं यो रसो मधु तस्य च उद्भेदः प्रागभावः तत्रैव पानलोभितो भ्रमरः । उद्वेल्लितुं प्रकाशयितुम् । कलिका कुड्मलस्त्रियौ ? ( कुड्मलोऽस्त्रियाम् ) ।' 'भ्रमरौ खिड्गपट्पदौ' । पक्षे बन्धो भरतोक्तः, रसः शृङ्गारश्च । अज्ञातार्थैवा नोपगम्येति धर्मः । अज्ञा उपायमजानन्त एव यथातथापि फलममिलपन्तीति नीतिः । अज्ञस्य ज्ञानादि विफलमिति युक्तिः । मुग्धराजस्य ॥ ६१६ ॥

दरवेविरोरुजुअलासु मउलिअच्छीसु लुलिअचिहुरासु ।
पुरिसाइरीसु कामो पिआसु सज्जाउहो वसइ ॥६१७॥

दरवेपनशीलोरुयुगलासु मुकुलिताक्षीषु लुलितचिकुरासु[2] ।
पुरुषायितशीलासु कामः प्रियासु सज्जायुधो[3] वसति ॥

विपरीतरतासक्ता स्त्रियं दृष्ट्वा काचित्सखीमुद्दिश्य वदति । विपरीतरतमाचरन्त्या हृदयरञ्जना[4] नायकः सतोषं वा इदमाह—दर इति । दरेषद्वेपनशीलमूरुयुगलं यासां तासु । सज्जो धृतः । 'दरोऽस्त्री साध्वसे गर्ते कन्दरे च दरी स्मृता । दराव्ययं मनागर्थे'—मेदिनी[5] । विपरीतरतादनपत्यापत्तेस्तन्निषेध इति धर्मः । अपेक्षितमेव मनोहारि भवतीति नीतिः । योगिना कामस्त्याज्य इति युक्तिः । प्रथमानुरागानन्तरे पुरुषायितमिति कण्ठाभरणे । मेघचन्द्रस्य ॥ ६१७ ॥

जं जं ते ण सुहाअइ तं तं ण करेमि जं ममाअत्तं ।
अहअं चिअ जं ण सुहामि सुहअ ! तं किं ममाअत्तं ॥६१८॥

---

१. अमुञ्चनत्सन्धि० for अविभक्तसन्धि० P. But the com. in its Pratıka reads 'अविहत्त' for 'अविभक्त' as well; although in the explanation this reading is altogether ignored.

२. मुकुलित० for लुलित० P.

३. सज्जासु अधो for सज्जायुधो P.

४. P. 170. Verses 46—47.

५. P. 817.

यदत्ते न सुखायते[1] तदत्र करोमि यन्ममायत्तम्[2]।
अहमेव दत्र सुखाये सुभग! तदिह ममायत्तम्॥

काचित्स्त्री चलचित्तं नायकमुद्दिश्य वदति—जं जमिति। अपि तु तदस्वायत्तमिति भावः। सहजानुरक्ता नायिकाऽनुरक्तं नायकं सव्याजोपालम्भमाह। अन्योन्यानुराग एव त्रिवर्गसाधको भवतीति धर्मः। येन कर्मणा स्वामी हृष्टो भवति तदेव कर्तव्यमिति नीतिः। अभ्यासादिना योगं कुर्यादिति युक्तिः। तस्यैव॥ ६१८॥

वावारविसंवाअं सअलावअवाण कुणइ हअलज्जा।
सवणाण उणो गुरुसंणिहे वि ण णिरंभइ णिओअं॥६१९॥

व्यापारविसंवादं सकलावयवानां करोति हतलज्जा।
श्रवणयोः पुनर्गुरुसन्निधावपि[3] न निरुणद्धि नियोगम्॥

गुरुसन्निधावपि कान्तवचनं शृण्वन्ती कापि लज्जावशादिदं कर्तव्यमिति विमूढा सखीं सम्बोध्य वदति। गुरुजनसान्निध्यात्सम्भाषणादरमानन्दित, किन्तु तद्वचनश्रवणेन मम प्रीतिरुत्पद्यते इति कान्तस्य चित्तवृत्तिमेकान्ते वापि सन्दिशति—वावारेति। हता त्यक्ता लज्जा यया सा। सकलानामवयवानां करचरणादीनां व्यापारस्य चलनादेर्विसंवादमन्यथात्वं करोति। श्रवणयोः कर्णयोर्नियोगं व्यापारं न निरुणद्धि नान्यथयति। कान्तवचनं शृणोत्येवेत्यर्थः। पुराणादिश्रवणेनापि पुण्योत्पत्तिर्भवतीति धर्मः। कुशला एकचित्तीभूय व्याजेन हसन्तीति नीतिः। गुरोः सन्निधाने बहु न विमर्शनीयं किन्तु तद्वचनमवधानेन श्रोतव्यमिति युक्तिः। वाक्पतिराजस्य॥ ६१९॥

किं भणह मं सहीओ मा मर दीसिहइ सो जिअंतीए।
कज्जालाओ एसो सिणेहमग्गो उण ण होइ॥ ६२०॥

किं भणथ[4] मां सख्यो मा[5] म्रियस्व[5] द्रक्ष्यते[6] स जीवन्त्या[7]।
कार्यालाप एषः स्नेहमार्गः पुनर्न भवति॥

काचिद्विरहिणी प्रियवियोगेन विकलां दशामापन्नप्राया सखीभिः प्रबोधिता 'आगतस्ते पतिर्मा म्रियस्व' इत्यादिवचनै, मा सखीवचने वदति। किं मरणाय व्यवस्यसि

1. सुखयति for सुखायते P.
2. The portion beginning with यन्ममायत्तं and ending with सुभग is missing in P.
3. ध्यानेऽपि for ध्यावपि P.
4. भणत for भणथ P.
5. मा म्रियस्व is missing in P.
6. द्रक्ष्यते for द्रक्ष्यते P.
7. जीवन्त्याम् for जीवन्त्या P.

जीवने सति प्रियसम्भोगः पुनरपि भविष्यतीति वदन्तीं सखीं कापि विरहिणी स्वजीवननिरपेक्षं वा इदमाह—किं भणाहेति । स्नेहमार्ग एवेति वा । सप्रियो भवतीभिः कार्येणोपाधिना स्नेहेनेति यावत्, एष आलापः क्रियते, न पुनः सखीनामयं स्नेहमार्गो भवतीति भावः । जीवतामेव धर्मो भवतीति धर्मः । ईप्सितेऽर्थे दृढं मनो न निवर्तते । तदुक्तम्—' क ईप्सितार्थस्थिरनिश्चयं मनः'[1] इति नीतिः । स्नेहादि स्यक्त्वा कार्यं मुक्तिरूपं चिन्तनीयमिति युक्तिः । तस्यैव ॥ ६२० ॥

एकल्लमओ दिट्ठीअ मइअ तह पुलइओ सअण्हाए ।
पिअजाअस्स जह धणुं पडिअं वाहस्स हत्थाओ ॥६२१॥

एकाकी[2] मृगो दृष्ट्या[3] मृग्या तथा प्रलोकितः[4] सतृष्णया ।
प्रियजायस्य[5] यथा धनुः पतितं व्याधस्य हस्तात्[6] ॥

कापि स्वामिने हरिणीचेष्टितं निवेदयन्ती स्वस्मिन्ननुरागदार्ढ्यमन्यापदेशेन समेव वदति—एकोल्लेति । एक इति स्नेहासाधारणविषयः । प्रियजाया यस्य सः । एकोल्लेति । इल्लउल्लौ स्वामि...[7]मृगीचेष्टितं दृष्ट्वा तद्धन्तुरपि व्याधस्य दयापरस्य स्वजायास्मरणपरवशस्य चेत्कराभ्यां धनुः पतितं तदा भवान् मय्यन्यसाधारणमेव प्रेम विधातुमर्हतीति भावः । सतीपालनम्...एवेति धर्मः । सस्नेहं सर्वैः समं व्यवहर्तव्यमिति नीतिः । सांसारिकमेवं व्यवहारं दृष्ट्वा योगिनोदास्तव्यमिति युक्तिः । तस्यैव ॥६२१॥

कमलेसुं[8] भमसि परिमलसि सत्तलं मालइं पि णो मुअसि ।
तरलत्तणं तुह अहो महुअर ! जइ पाडला हरइ ॥६२२॥

कमलेषु भ्रमसि परिमलसि सप्तलां मालतीमपि[9] नो मुञ्चसि ।
तरलत्वं तवाहो![10] मधुकर ! यदि[11] पाटला हरति ॥

काचित् कमप्यनुरागविषयं स...पतिमुद्दिश्यान्यापदेशेन वदति । कस्यचिज्जायकस्य

---

१. Kumāra V. 5.
२. एको for एकाकी P.
३. दृष्टो for दृष्ट्या P.
४ प्रलोकितः is missing in P.
५. ०जायास्य for ०जायस्य P.
६. व्याधहस्ताभ्याम् for व्याधस्य हस्तात् P.
७. A few syllables are missing in P.
८. णालिणीसु for कमलेसु Weber.
९. मालतीम० is missing in P.
१०. तवपुनर् for तवाहो P.
११. यथा for यदि P.

बहुस्त्रीवल्लभतामन्यापदेशेन सूचयन्ती वा कापीदमाह—कमलेसु इति। परिमलसि परिमर्दयसि। दक्षिणोऽयं नायकः। तदुक्तम्—

यो गौरवं भयं स्नेहं प्रेमसद्भावपूर्वकम्।
न मुञ्चत्यन्यचित्तोऽपि ज्ञेयोऽसौ दक्षिणो यथा॥

'सुमना मालती जातिः' इत्यमरः[1]। सप्तला नवमालिका। सैव नेवारिरिति ख्याता। यथा मधुकरस्य पाटलायामेवासं...[2]वस्तथा तवापि मय्यासङ्गे न स्यादिति भावः। इदं कृतमिदं न कृतमित्यादि न प्रकाश्यमिति धर्मः। एकनिष्ठा सेवा फलवती भवतीति नीतिः। नानान्यचिध्यानेन स्थैर्यं न भवतीति युक्तिः। शालवाहनस्य॥ ६२२॥

दोअंगुलअकवालअपिणद्धसविसेसणीलकंचुइआ।
दावेइ थणत्थलवण्णिअं व तरुणी जुअजणाणं॥ ६२३॥

द्व्यङ्गुलककपाटक[3]पिनद्धसविशेषनीलकञ्चुकिका[4]।
दर्शयति स्तनस्थलवर्णिकामिव तरुणी युवजनेभ्यः[5]॥

नीलकञ्चुकधारिणीं काञ्चिद् यूनामात्मानं दर्शयन्तीमेका दृष्ट्वाऽपरस्याः कथयति—दोअंगुलअेति। द्व्यङ्गुलिका द्व्यङ्गुलनमाणा कवलिता तुच्छीकृता पिनद्धा परिहिता नीला श्यामा कञ्चुलिका यया सा तरुणी युवभ्यः घनां निबिडां स्तने वर्णिकामिव दर्शयतीत्यन्वयः। नानावेष्टनेन कञ्चुलिकायाः स्थौल्येनावरकत्वमुक्तम्। नीलिम्ना घनां निबिडां स्तने वर्णिकामिव दर्शयतीत्युत्प्रेक्षा। प्रदक्षिणदिशि स्त्रीणां कञ्चुलिका दृश्यते। साध्वसं स्वस्या उपदर्शयन्ती नायकमुत्तरलयति। स्तनायत्रयधास्त्वया कुलस्त्रीभिरावरणीया यथा परैर्न दृश्यन्त इति धर्मः। विज्ञा एकदेशदर्शनेनैव भद्रत्वमभद्रत्वञ्च जानन्तीति नीतिः। बाह्यं किञ्चिल्लक्षणं दृष्ट्वाऽऽन्तरो भावो लक्षणीय इति युक्तिः। अनुरागस्य॥ ६२३॥

अमअं चिअ हिअअं हत्था तण्हाहरा सअण्हाणं।
चंदमुहि! कत्थ णिवसइ अमित्तदहणो तुह पआवो?॥६२४॥

अमृतमेव हृदयं हस्तौ तृष्णाहरौ सतृष्णानाम्।
चन्द्रमुखि[6]! कुत्र निवसति अमित्रदहनस्तव[7] प्रतापः?॥

---

१. II. 4. 72.
२. A few syllables are missing here.
३ ०कवलित० for ०कपाटक० P.
४. ०लिका for ०किका P.
५. युवभ्यः for युवजनेभ्य. P.
६. ०मुख for ०मुखि P.
७. ०दहनोद्गतदहः for ०दहनस्तव P.

सुन्दरं सप्रतापं राजानं सेवाकुशला काचिदुत्तमा नायिका स्तुवन्ती वदति— काञ्चिद्विदग्धनायिकामभिमुखीकर्तुं दूती नायकगुणं सचाटु वर्णयति वा। तां प्रति तत्र रागितेति सूचयन्ती कस्याश्चिल्लब्धसुरतायाः सखी चाटूक्तिभिर्नायकमुपालभते वा—अमत्रमिति। परनिर्वृत्तिकरत्वादमृतमेव हृदयम्। अर्थिजनाभीष्टप्रदानात् तृष्णाहरौ हस्तौ। आह्लादकत्वाच्चन्द्रसमं मुखम्। अमित्रं शत्रुं दहति अमित्रदहनस्तव प्रतापः। सत्त्वत्यागशौर्याख्या महागुणास्त्रयो धार्मिकमेवाश्रयन्ते इति धर्मः। कमनीयाकृतेः कोपोऽपि दुर्लङ्घ्यत इति नीतिः। एवंविधो हि पुरुषो सुकृयधिकारीति युक्तिः। शालवाहनस्य. ॥ ६२४ ॥

मा गच्छह विसंभं पुत्तअ ! चडुआरओ इमो लोओ।

सूइवेहो कण्णस्स पेच्छह किं णिज्जइ पमाणं ॥ ६२५ ॥

मा गच्छत विस्रम्भं पुत्रक[1] ! चाटुकारकोऽयं[2] लोकः।

सूचीवेधः कर्णस्य पश्यत किं नीयते[3] प्रमाणम् ॥

काचिद्धितैषिणी स्त्री समागमात्कमपि पुत्रादिकं निवारयन्ती वदति। इङ्गितगोपनार्थं वा दूती नायकमाह—मा गच्छतेति। विस्रम्भं विश्वासं मा गच्छत। लोकः स्त्रीलोकः चाटुकारकः प्रियवक्ता, परं नतु हृदयपूर्वकं स्वत्समीहितकर्ता। अत्रार्थान्तरमुपन्यस्यति। स चाटुकारकः प्रकरणात् कर्णस्य सूच्या वेधो वेधकर्ता, स च प्रमाणं प्रमातृत्वेन सत्यवादित्वेन किं नीयते ज्ञायते। परिणामे तद्वचनं सूचीवेध इव दुस्सहमिति तत्र विश्वासो न कार्य इति भावः। वेध इति कर्तरि पचाद्यच्। 'प्रमाणं हेतुमर्यादाशास्त्रपु सत्यवादिनि' इति मेदिनीकारः। सदाचारवता मिथ्या चाटु न वक्तव्यमिति धर्मः। चाटुक्तौ विश्वासो न कर्तव्यः। तदुक्तम्—

कितवा यं प्रशंसन्ति यं प्रशंसन्ति योषितः।

चारणा यं प्रशंसन्ति निप्रशस्तो विनश्यति ॥

इति नीतिः। अभ्यासेन सूक्ष्ममपि परमाण्वादि प्रत्यक्षं भवति किं पुनर्महेति युक्तिः। पालितस्य ॥ ६२५ ॥

रक्खेइ पुत्तअं मत्थएण ओच्छोअअं पडिच्छंती।

अंसूहि पहिअघरिणी ओल्लिज्जंतं ण लक्खेइ ॥ ६२६ ॥

---

१. 'क' is missing in P.

२. P. adds खलु after अयम्

३. नीयत for नीयते P.

४. P. 65. V. 63.

रुदति पुत्रकं मस्तकेन अच्छोदकं[1] प्रतीच्छन्ती ।
अश्रुभिः पथिकगृहिणी आर्द्रीभवन्तं न लक्षयति ॥

गृहवार्ताकरणाय प्रियेण प्रहिते सहचरे नायिकाया अत्यन्तविमनस्कतां सखी दर्शयति—रुअदि इति। अर्थात् पुत्रस्यैव मस्तकेन। नवाभ्रस्य नवमेघस्य उदकं प्रतीच्छन्ती पुत्रकं बालपुत्रं रुदतीत्यन्वय.। आर्द्रीभवन्तं पुत्रकं न लक्षयति न पश्यति। नयनयोरावरणात् पुत्रकमित्यल्प इति कन्। ओक्कोडअमिति पाठे ओकोदकम् ओको गृहं तस्य उदकं प्रतीच्छन्ती। गृहमेतादृशं येन ततो जलं बालपुत्रस्य शिरसि पततीत्यवस्थेयं तस्या इति भावः। छोअअमिति पाठे अपगतं यच्छदनं पटलं चाल्हिरिति प्रसिद्धं तस्मादर्थाद्गलज्जलमित्यर्थः। अवश्यंभावि भवत्येव, नाभुक्तं क्षीयते कर्मेति धर्मः। अन्यमनस्कतया प्रारब्धमन्यभोगेन विनश्यतीति नीतिः। अन्यत्र कृतचित्ता बाह्यासंवेदना भवन्तीति युक्तिः। शालवाहनस्य॥ ६२६॥

सरए सरम्मि पहिआ जलाइ कंदोट्टसुरहिगंधाइ ।
धवलच्छाइ सअण्हा पिअंति दइआण व मुहाइं ॥६२७॥

शरदि सरसि पथिका जलानि कन्दोट्टसुरभिगन्धीनि[2] ।
धवलाच्छानि सतृष्णाः पिबन्ति दयितानामिव मुखानि[3] ॥

शरदि सरोजलं पिबतः पथिकान् दृष्ट्वा कस्याश्चित्प्रोषितपतिकायाः संकुचेती काचिदुत्प्रेक्षमाणा वदति। वर्षास्वनागतः शरद्यपि नागमिष्यतीत्युत्पन्नतां विरहिणीं सखी वा साश्वासयति—सरए इति। कन्दोट्टं नीलोत्पले देशी। धवलानि तानि अच्छानि चेति। यथा दयितानां मुखानि नवनीलोत्पलानीव सुरभीनि धवलानि सुन्दराणि अच्छानि निर्मलानि पिबन्ति तथेत्यर्थः। ' धवला गवि। वृषे श्रेष्ठे पुमान्, वाच्यलिङ्गः शुक्लेऽथ सुन्दर,इति मेदिनी।'[4] धवलाक्षाणि धवललोचनानीति वा। अतस्तथापि पतिरेवंविधचेष्ट एवागतप्रायो मा संवसो भवेत्यर्थः। शरदि तीर्थयात्रार्थं कश्चिदाहेति धर्मः। शरदि सरोजलं पेयम्, शरदि नादेयं नादेयं पानीयं पानीयमिति नीतिः। असन्त एव सद्‌बुद्धिं विहाय सांसारिका आत्मानं मुञ्चन्तीति तन्न विधेयमिति युक्तिः। तस्यैव ॥६२७॥

अब्भंतरसरसाओ उवरिं पव्वाअबद्धपंकाओ ।
चंकम्मंतम्मि जणे समूससंति व्व रच्छाओ ॥ ६२८ ॥

---

१. नवाभ्रोदकम् for अच्छोदकम् P.
२. ०सलिलानि for ०गन्धीनि P.
३. P. adds इव after मुखानि.
४. P. 207. V. 99-100.

अभ्यन्तरसरसा उपरि प्रवात[1]बद्धपङ्काः ।

चङ्क्रममाणे जने[2] समुच्छ्वसन्तीव रथ्याः ॥

शरदि रथ्याया यात्रायोग्यतां कश्चित्सखायं प्राह—अब्भंतरेति । चङ्क्रममाणे शिथिलं गच्छति जले रथ्याः समुच्छ्वसन्तीव उच्छ्वासमुद्रेदं व्यक्ततां यान्तीव । पच्छाप्रे-तीपच्छुप्के देशी । कर्दमभयेन नागच्छतो जनस्य शङ्कानिरासाय रथ्यानां किञ्चिच्छुष्कतां वा प्राह कश्चित् । 'रथ्या प्रतोली विशिखा' इत्यमरः[3] । राजमार्गेऽयं शब्दः । शरदि यात्रा विधेया संन्यासिप्रभृतिभिरिति धर्मः । अनुरागविशेषोऽध्यवसायहेतुरिति नीतिः । आ...[4] आर्द्रैर्लिङ्गैर्शायत इति युक्तिः । पालितस्य ॥ ६२८ ॥

मुहपुंडरीअछाआइ संठिए उअह राअहंसे व्व ।

छणपिट्ठकुट्टणुच्छलिअधूलिधवले थणे वहइ ॥ ६२९ ॥

मुखपुण्डरीकच्छायायां[5] संस्थितौ[6] पश्यत[7] राजहंसाविव ।

क्षणपिष्टकुट्टनो[8]च्छलितधूलिधवलौ स्तनौ वहति ।

काञ्चिदुत्सवदिवसे पिष्टातककारीयौ स्तनौ वहन्तीं दृष्ट्वा एका सखी अपरस्याः कथयति । पिष्टातकप्रथाङ्गी सुरतसुखातिशयमुत्पादयिष्यति । तदथ तां तत्पार्श्वमान-यिष्यामीति सूचयन्ती दूती नायिकायाः स्तनयोरुत्प्रेक्षां वा करोति—मुहपुंडरीअ इति । मुखं पुण्डरीकं सिताम्भोजमिव तस्य छायायां संस्थितौ राजहंसाविव स्तनौ वहति, कापोत्यार्थम् । चणे पिष्टस्य पिठान इति ख्यातस्य कुट्टः कुट्टनं तेन उच्छलिता या धूलिस्तया धवलौ स्तनौ । 'क्षण उद्धव उत्सवः' अमरः[9] । उत्सवदिने पिष्टातका-दिना देवताराधनं कर्तव्यमिति धर्मः । यो भवति स तं येन केनापि स्तौतीति नीतिः । अविद्यमानोऽप्यस्त्येव सद्बुद्धिं करोतीति युक्तिः । रोहायाः ॥ ६२९ ॥

तह तेण वि सा दिट्ठा तीअ वि तह तस्स पेसिआ दिट्ठी ।

जह दोण्ह वि समअं चिअ णिव्वुत्तरआइ जाआइ ॥ ६३० ॥[10]

---

१. किञ्चिच्छुष्क० for प्रवात० P.

२. जग्गे for जने P.

३. II. 2. 3.

४. A few syllables are missing here.

५. यां is missing in P.

६. संस्थितौ is missing in P.

७. दृश्यते for पश्यत P.

८. ०लो० for ०नो० P.

९. I. 6. 33.

१०. P. does not give figures of enumeration at the end of

तथा तेनापि सा दृष्टा तयापि तथा तस्य प्रेषिता दृष्टिः ।
यथा द्वावपि सममेव निर्वृत्तरतौ जातौ ॥

दूती सव्यापारं शैथिल्यं सूचयन्ती अन्योन्या...[1]यनि—तइ तेणेति । निर्वृत्तं निर्व्यूढं रतं सुरतं ययोस्तादृशौ जातौ । कर्मणि अध्यवसाय एव निष्पत्तिहेतुरिति धर्मः । दृष्टिविशेषेणैव कार्यमुन्नयन्तीति नीतिः । प्राप्ततत्त्वो दृष्टिमेरेनैव ज्ञायत इति युक्तिः । माधवस्य ॥ ६३० ॥

वाउलिआपरिसोसण ! णिउंजपत्तलणमुलहसंकेअ !
सोहग्गकणअकसवट्ट ! गिम्ह ! मा कह वि खिज्जिहिसि ॥ ६३२ ॥

वापि[2]कापरिशोषण ! निकुञ्जपत्त्र[3]करण[4]सुलभसङ्केत !
सौभाग्यकनककषपट्ट[5] ! ग्रीष्म ! मा कथ[6]मपि क्षीणो भविष्यसि ॥

काचिदसती सुलभसङ्केतं ग्रीष्ममुद्दिश्य वदति । जारं वा सङ्केतस्थानं श्रावयति—वाउलिआ इति । अल्पशाखालतिकायां वाउलिआ देशी । अल्पा शाखा यस्यास्तस्या लतिकाया लतायाः शोषण ! शोषजनक ! हे ग्रीष्म ! कुडुंगो निकुञ्जे देशी । तस्य प्र...[1]आतपत्रक ! हे ग्रीष्म ! सौभाग्यमेव कनकं तस्य कषणं निष्कर्षस्तस्य पट्टक ! हे ग्रीष्म ! लतायाः शोषको ननु छायाप्रधानत्वणामिति भावः । ग्रीष्मे शीर्णानि पत्त्राणि कन्दरादौ पतन्ति । सौभाग्यस्य दुष्प्रापकत्वात्कनकेन साधर्म्यम् । एकाकिन्यः स्त्रियो ग्रीष्मे न प्रहेया इति धर्मः । दुःखदोऽप्यनुकूलकारी अपेक्षितो भवतीति नीतिः । ध्यानार्थं स्थानविशेषो ध्वनित इति युक्तिः । विदग्धस्य ॥ ६३२ ॥

जइ चिंतेइ परिअणो आसंकइ जइ अ तस्स पडिवक्खो ।
बालेण वि गामणिणंदणेण तह रक्खिआ पल्ली ॥ ६३३ ॥

यथा चिन्तयति परिजन आशङ्कते यथा च[7] तस्य प्रतिपक्षः ।
बालेनापि ग्रामणीनन्दनेन तथा रक्षिता पल्ली ॥

---

this verse. It puts the enumerative mark of the next verse as 632. It thus obviously omits one verse between 629 and 632.

१. A few syllables are missing here.

२. वाउलि० for वापिका० P.

३. P. adds ल after पत्त्र.

४. करण is missing in P.

५. P. adds क after पट्ट.

६. मा कथ is missing in P.

७. न for च P.

काचित्पल्ल्यन्तरपुरुषेण जातानुरागा, सा च तस्स्थानं गच्छति। ततस्तेन सा गदिताऽहमेव तव स्थानं रात्रावागमिष्यामीति सा तं निषेधयन्ती वदति—तइ इति। परिजनो भृत्यस्तथा चिन्तयति यथा तस्यार्थात्स्वामिनः प्रतिपक्षः शत्रुर्न आशङ्कते न तर्कयति। निभृतेनैव क्रमेण सर्वं चिन्तयतीति भावः। परिजनचिन्तामेव दृष्टान्तमुखेनाह। बालेनापि ग्रामणीनन्दनेन ग्रामाधिकृतपुत्रेण तथा पल्ली पालिरिति ख्याता रक्षिता। अथ च रात्रौ ग्रामणीनन्दनः पल्लीं भ्रमति तेनैवं मया चिन्तितं तन्निकटमेवाहमागच्छामि न पुनस्त्वमागमिष्यसीति भावः। रक्षणं धर्मजनकमिति धर्मः। शत्रुर्यथा न जानाति तथा चिन्त्यमिति नीतिः। रागादि त्यक्त्वा तथा ध्यानादिर्विधेयो येन प्रतिपक्षस्य रागादेरुद्रेको न भवतीति युक्तिः। शालवाहनस्य॥ ६३३॥

अण्णेसु पहिअ ! पुच्छसु वाहअपुत्तेसु पुसिअचम्माइं।
अम्हं वाहजुआणो हरिणेसु धणुं ण णामेइ॥ ६३४॥

अन्येषु पथिक ! पृच्छ[1] व्याधकपुत्रेषु[2] पृषतचर्माणि।
अस्माकं व्याधयुवानः हरिणेषु धनुर्न[3] नमयन्ति[4]॥

केनापि वीरपुरुषेण पल्ल्यन्तरावस्थितस्त्रीसमाकृष्टचेतसा निष्क्रमप्रवेशभिक्षार्थं चरकल्पेन पथिकवेशधारी कश्चित्पुरुषः प्रहितः, स च हरिणचर्मभिक्षाव्याजेन तस्यां पल्ल्यां भ्रमन् कामपि दृष्टवान्, सा च तत्रत्या तस्याः पल्ल्या दुर्गमत्वं ख्यापयन्ती वदति। पत्युर्विक्रमगुणं स्त्रीषु व्यासक्तिं वा कापि सूचयन्ती पथिकमाह—अण्णेसु इति। अन्येषु व्याधानां कुटुम्बेषु। पृषतानां हरिणानाम्। हे पथिक ! पृच्छस्व अनुसंधत्स्व। अस्माकं च ये व्याधयुवानः ते च हरिणेषु धनुर्न नमयन्ति। वीरपुरुषेष्वेव धनुर्नमयन्ति। कामासक्ताः क्षीणबला हरिणवधेऽपि समर्था न भवन्ति। मृगाणां वधाभावात्कुतश्चर्मसम्भवः। बहवश्चात्र व्याधास्तेनानेकवीरपुरुषरक्षितेयं पल्ली, ततो नात्रागन्तव्यमिति भावः।

पृषन्मृगे पुमानिन्दौ[5] न द्वयोः पृषतोऽपि ना।
अनयोश्च त्रिषु श्वेतबिन्दुयुक्तेऽप्युभाविमौ[6]॥

इति मेदिनी[7]। अनुरक्तानां योषितः स्वपतिपक्षपातं कुर्वन्तीति धर्मः। क्रेनरि यथार्थ-

1. P. adds स्व after पृच्छ
2. व्याधकुटुम्बेषु for व्याधकपुत्रेषु P.
3. 'न' is missing in P.
4. नामयन्ति for नमयन्ति P.
5. पुमान्विन्दौ for पुमानिन्दौ P.
6. ०भावपि for ०भाविमौ P.
7. P. 85. V. 135.

मैत्रोपन्यसनीयं ननु प्रपञ्चनीयमिति नीतिः । हरिणेषु व्याधानामपि दयाय धनुषोऽप्यापारे शान्तिरस्तेति युक्तिः । तस्यैव ॥ ६३४ ॥

गअवहुवेहव्वअरो पुत्तो मे एक्ककंडविणिवाई ।
तह सोण्हाए पुलइओ जह कंडकरंडअं वहइ ॥६३५॥

गजवधूवैधव्यकरः पुत्रो मे एककाण्डविनिपाती ।
तथा[1] स्नुषया प्रलोकितो[2] यथा काण्डसमूहं[3] वहति ॥

कस्याश्चिद् व्याधस्य माता पुत्रवधूमुपालभमाना कामपि प्रतिवेशिनीमुद्दिश्य वदति—गज इति । गजवधूर्हस्तिनी तस्या वैधव्यकरो गजहन्ता । एकेनैव काण्डेन विनिपातयितुं शीलं यस्य स मम पुत्रः । काण्डस्य शरस्य करण्डकं समूहं वहति । काण्डानां विनिपातेऽसमर्थत्वादेवम् । स्नुषायामेवासक्तत्वात् । तथा नियच्छति इति पाठे विनष्टितोऽन्यथात्वं स्वभावादपगत इत्यर्थः । 'करण्डा[4]म्बन्धपात्रेऽसौ समूहो[5] मुद्गरोगयोः' इति मेदिनी । मतं च एतादृशं धर्मप्रमथनेनेति धर्ममाचरणीयमिति धर्मः । तथा च शराभ्यासो विधेयो येनैकेनैव काण्डनिपातेनारयः पतन्तीति नीतिः । एकदैव बलायते दृष्ट्वा संसारे उदास्यमिति युक्तिः । मोहायाः ॥ ६३५ ॥

विंझारुहणालावं पल्ली मा कुणउ गामणी ससइ ।
पच्चुज्जीविओ जइ कह वि सुणइ ता जीविअं मुअइ ॥६३६॥

विन्ध्यारोहणालापं पल्ली मा करोतु ग्रामण्यः[7] श्वसिति ।
प्रत्युज्जीवितो[8] यदि कथमपि शृणोति तज्जीवितं[9] मुञ्चति ॥

गतश्रिये पल्लीपतौ आनापादवेनान्त्यां दशामापन्ने इव सति विनष्टशोभितायां पल्ल्यां पल्लीजनेषु विन्ध्यारोहणोन्मुखेषु सत्स्वनन्तरं तस्य च पुनः सति पाटवे पल्ल्यां सति च समाश्वासे पल्लीपतेरेव बन्धुः पल्लीवासिभ्य इदमाह—विंझारुहणेति । विन्ध्यारोहणे य आलापो विन्ध्यम् आरोहयाम इत्येवंप्रकारकः तम्, तथ्यया पल्लीस्थो जनो मा करोतु यतो ग्रामणी ग्रामाध्यक्षः श्वसिति जीवति । अस्येव रिपवो भरणाग्रनीया विन्ध्यमारोक्ष्यन्तीति जीवितत्यागे हेतुरभिसन्धिश्चेति । अन्त्यां च दशामापन्नो

१. हृष्ट० for तथा P.
२. तथाकृतो for प्रलोकितो P.
३. ०करण्डं for ०समूहं P.
४. करण्डो० for करण्डा० Medini.
५. समूहमुद्ग० for समूहो मुद्ग० P.
६. P. 57 V. 93.
७. ग्रामणी for ग्रामण्यः P.
८. पच्चुज्जीवितो for प्रत्युज्जीवितो P.
९. ततो जीवितं for तज्जीवितम् P.

यत् पुनर्जीवति तत्र पुण्यफलमेवेति धर्मः । विन्ध्यारोहणं जीवितसंशायकमतस्तन्न कार्यमिति नीतिः । एवं सन्दिग्धजीवने संसारे उदास्तव्यमिति युक्तिः । इतस्तु कविनाम टीकासु न लब्धमिति ॥ ६३६ ॥

अप्पाहेइ मरंतो पुत्तं पल्लीवई पअत्तेण ।
मह णामेण जह तुमं ण लज्जसे तह करेज्जासु ॥ ६३७ ॥

'शिक्षयति म्रियमाणः पुत्रं पल्लीपतिः प्रयत्नेन ।
मम नाम्ना यथा त्वं न लज्जसे तथा करिष्यसि' ॥

अनाचार एवासतीत्वम् । त्वं चेत्साध्वी तदा मम नाम्ना सलज्जा भविष्यसीत्य-तस्त्वयापि तद्व्यापारे सति साम्ये कुतो लज्जा स्यादिति भावः । पुत्राध्यापनं कार्यं यत्ने-नापीति धर्मः । पुत्रेण च तथा कर्म कर्तव्यं येन पितुरप्युत्कर्षो भवतीति नीतिः । लज्जादिहेतुकं कर्म संसारे दृष्ट्वा तत्र च योगिना उदास्तव्यमिति युक्तिः ॥ ६३७ ॥

अणुमरणपत्थिआए पच्चागअजीविए पिअअमम्मि ।
वेहव्वमंडणं कुलवहूअ सोहग्गअं जाअं ॥ ६३८ ॥

अनुमरणप्रस्थितायाः[2] प्रत्यागतजीविते प्रियतमे ।
वैधव्यमण्डनं कुलवध्वाः सौभाग्यकं जातम् ॥

काचित्प्रतिष्ठिता स्त्री प्रोषितपतिकां स्वसुतामविचञ्चलां तत्स्वामिनं समागत-कल्पं श्रुत्वाऽलङ्कारकरणे चाञ्चल्ये च निषेधयन्ती तमन्यापदेशेन वक्ति—अनुमरणेति । वैधव्ये यन्मण्डनं तत्कुलवध्वाः सौभाग्यकं जातम् । प्रियतमे प्रत्यागतजीविते सति अनुमरणाय प्रस्थितायाः कुलवध्वाः प्रोषिते पत्यौ त्वमपि निरुत्साहचिह्ना धैर्यवती भव, तेन त्वाम् अविरलेपचिह्नधारिणीं दृष्ट्वा त्वामधिकसुभगां करिष्यतीति भावः । पत्यौ परासौ स्त्रीणामनुमरणमिति धर्मः । यस्मिन्समये यद्विधेयं तत्तदा कर्तव्यमिति नीतिः । क्षणादेव जीवनं मरणं संसारे विमृश्योदास्तव्यमिति युक्तिः । कण्ठाभरणे[3] करुणा-नन्तरोऽनुभावोयम् । अथ यथेयं मत्प्राणाभूतेत्यमस्या अहमपि जीवितमेवेति पत्यु-र्विस्रम्भोऽनुरागः, पत्न्याः पुनः प्रेत्यापि यत्सङ्गमोऽभिलषितः सोऽयं जीवत्येव जीवेश्वरः समासादित इति विश्रम्भादिति सुखमेवान्वभूयतेति ॥ ६३८ ॥

महुमच्छिआइ दट्ठं दट्ठूण मुहं पिअस्स सूणोट्ठं ।
ईसालुई पुलिंदी रुक्खच्छाअं गआ अण्णं ॥ ६३९ ॥

---

1. This verse is missing in P.
2. ०प्रस्थि० for ०प्र० P.
3. P. 324.

मधुमक्षिकया दष्टं दृष्ट्वा मुखं प्रियस्य[1] शून्योष्ठम् ।
ईर्ष्यालुः पुलिन्दी[2] वृक्षच्छायां गतान्याम् ॥

काचित्पुलिन्दस्त्री मधुमक्षिकया दष्टोष्ठं पतिमन्यकामिनीदष्टोष्ठमाशङ्कय इति तदीयमक्षी तच्चेष्टां स्वसख्याः कथयति—महुमच्छिआइ इति । शून्यो निर्व्यापार ओष्ठो यत्र तन्मुखम् । उच्छलोष्ठमिति पाठे उच्छलदोष्ठं यथा स्यादेवम् । ईर्ष्यायिता कुपिता, पुलिन्दो व्याधस्तस्य वधूः । तपस्विनां वृक्षच्छायाश्रयणं धर्मः । अवमानना न सोढव्येति नीतिः । मधुमक्षिका[3]त्राश्रये वनादौ मुमुक्षुणा योगाभ्यासो विधेय इति युक्तिः ॥ ६३९ ॥

धण्णा वसंति णीसंकमोहणे बहलपत्तलवडम्मि ।
वाअंदोलणओणविअवेणुगहणे गिरिग्गामे ॥ ६४० ॥

धन्या वसन्ति निरशङ्क[4]मोहने बहलपत्त्रलवने ।
वातान्दोलनावनामित[5]वेणु[6]गहने गिरिग्रामे ॥

कलाविदाभिमतपुरुषेण यथेच्छसुरतमभिलपन्ती गिरिवासप्रशंसां कुर्वती कापि सखीमाह—धण्णा इति । गिरिग्रामे वनमये तादृशं यत्र स्वच्छन्दं मोहनं निधुवनं । वेणुभिश्छन्नत्वाभिधानं परेषामलक्ष्यत्वाभिधान[3]ग्राम इति पाठेऽर्थश्चिन्त्यः । सिध्मादित्वान्मत्वर्थीये सति पत्त्रल इति । गिरिग्रामे गिरिसमूहे वा । यद्वा यत्र गिरौ वासवासना तदानीं[3] तस्य स्वच्छन्दत्वाभिधानाय तदभिधानवैखानसा एव धार्मिका वने वसन्तीति धर्मः । तथा च नीतिमता व्यवहर्तव्यं यथा वनेऽथारामे वस्तव्यमिति नीतिः । योगाभ्यासपरेण योगिना गिरावेव वस्तव्यमिति युक्तिः ॥ ६४० ॥

पप्फुल्लघणकलंबा णिद्धोअसिलाअला मुइअमोरा ।
पसरंतोज्झरमुहला ओसाहंते गिरिग्गामा ॥ ६४१ ॥

प्रोत्फुल्ल[7]घनकदम्बा[8] निर्धौतशिलातला मुदित[9]मयूराः ।
प्रसर[10]न्निर्झरमुखरा उत्साहयन्ति[11] गिरिग्रामाः[12] ॥

---

१. पत्युः for प्रियस्य P.

२. ईर्ष्यायितपुलिन्दी for ईर्ष्यालुः पुलिन्दी P.

३. A few syllables are missing here.

४. निरशङ्क is missing in P.

५. न चलद् for नावनामित P.

६. ०रेणु० for ०वेणु० P.

७. प्रफुल्ल० for प्रोत्फुल्ल० P.

८. ०कदम्ब for ०कदम्बा P.

९. मुदिर० for मुदित० P.

१०. प्रसव० for प्रसर० P.

११. उपशोभन्ते for उत्साहयन्ति P.

१२ ०ग्रामाः for ०ग्रामाः P.

अस्मिन्गाथायां पूर्वगाथाया एवाभासः। पप्फुल्लेति। प्रफुल्लैर्घनैः कदम्बैः कदम्बकुसुमैर्निर्धौतं पवित्रितं सम्यक्कृतं शिलातलं येषु ते गिरिग्रामाः। प्रसृता निर्झरेण मुखराः सशब्दा गिरिग्रामा उपाधिकं शोभन्ते। 'उपोऽधिके च' इति पाणिनिः। अर्थद्वयमन्यत् पूर्वगाथार्थद्वयेन तुल्यम्। नीतौ—गिरयो ग्रामाश्च यथा परेषां निर्जित्य गृहीताः स्वस्मिन् शोभन्ते तथा विधेयमिति विशेषः॥ ६४१॥

तह परिमलिआ गोवेण तेण हत्थं वि जा ण ओल्लेइ।
स च्चिअ खडणा एण्हिं पेच्छह कुडदोहिणी जाआ॥६४२॥

तथा परिमलिता[1] गोपेन तेन हस्तमपि या नार्द्रयति।
सैव खलना इदानीं प्रेक्षध्वं[2] कुटदोहिनी जाता॥

काचिन्नवोढा प्रेयसि प्रथममत्यन्तविरक्ता आसीदनन्तरं समाश्वासेनाल्पकालेनैव अत्यन्तानुरागवती बभूवेति तां ज्ञात्वा तत्सखीषु सख्या अन्यापदेशेन तच्चेष्टितं कथयति—तह इति। या धेनुः पूर्वं हस्तमपि नार्द्रयति सैवेदानीं तेन गोपेन तथा परिमर्दिता सती घटदोहिनी जातेत्यन्वयः। विमिलिता सुचरोहा कृता। हस्तमपि नार्द्रयति किमुत घटसंभवद्दुग्धदानम्। खलना नाडिरिति प्रसिद्धा। देश्यां कुटो घटः, तन्मानम् अर्थात्पयो दुह्यते यस्यां तादृशी। 'कुटः कोटे पुमान्। स्त्री तु घटे...[3]सयोर्गृहे'[4]। गौः स्वर्गोऽस्त्वत्पात्रि (इति) गोत्रो धार्मिकत्वेन तथा परिमलनं विमर्दोऽभ्यासोऽर्थाद् धर्मे कृतो यथा सुखेन स्वर्गलाभो भवतीति धर्म.। खलास्तु तथा कुर्वते यथा हस्त...[3]उपकारे न सहन्त इति नीतिः। सांसारिकमस्थैर्यमेतादृशं यदेकस्यामेव गवि नानावस्था तेन तत्र संसारे वदास्तव्यमिति युक्तिः॥ ६४२॥

धवलो जीअइ तुह कए धवलस्स कए जीअंति गिट्ठीओ।
*जीअ तंबे! अम्ह वि जीविएण गोट्ठं तुमाअत्तं॥ ६४३॥*

धवलो जीवति तव कृते धवलस्य कृते जीवन्ति गृष्टयः[5]।
जीव[6] ताम्रे! अस्माकमपि[7] जीवितेन[8] गोष्ठं त्वदायत्तम्॥

---

१. परिमिलिता for परिमलिता P.
२. प्रेक्षस्व for प्रेक्षध्वम् P.
३. A few syllables are missing here.
४. Medini reads 'घटे स्त्रीपुंसयोर्गृहे'
५. गोष्ठय. for गृष्टयः P.
६. जीविते for जीव ताम्रे! P.
७ अपि is missing in P.
८ न गोष्ठं स्वदा is missing in P.

कस्यचिदभाद्रना केनापि पुरुषेण सकृत्प्राप्तसमागमाचिरेणवरं जातानुरागा ततो गुरुजनप्रबोधाद्यभावाकया तद्विरहेणान्तिमां दशामापन्ना इति ज्ञात्वा तदीयहृदयङ्ग-मेनानुरक्तेन समाश्वास्य काचिन्निपुणा दूती प्रहिता सा च जनाकीर्ण एव देशे तामाश्वास-यन्त्यन्यापदेशेन वदति—धवलो इति। धवल. पण्ड-।'धवला नवि वृषे श्रेष्ठे पुमान्'इति। तव कृते त्वद्धेतोः। गोवृषयोऽर्थात्ग्रामेव सभाः। तथा धेनुरिति प्राचीनटीकायाम्। धवलः श्रेष्ठो धार्मिको जीवतीति धर्मः। परेषामुपकाराय जीवनमपि न गणनीयमिति नीतिः। अन्योऽन्यक्रियासु उपाधिसम्भेदर्दर्शनाक्षोभं विमृश्य तद्धानाय योगिना यतनीयमिति युक्तिः ॥ ६४३ ॥

अग्घाइ छिवइ चुंबइ थवेइ हिअअम्मि जणिअरोमंचो ।
जाआकवोलसरिसं पेच्छइ पहिओ महुअपुप्फं ॥ ६४४ ॥

आजिघ्रति स्पृशति[1] चुम्बति [2]स्थापयति हृदये जनितरोमाञ्चः ।
जायाकपोलसदृशं पश्यत[3] पथिको मधूकपुष्पम्[4] ॥

प्रियपार्श्वागतः कश्चिद्वनितदर्शनेन तत्कायां तोषमलिन्माह। मधूकवृक्षसङ्केत-स्थानमहं गता त्वन्न गतस्तत्रेति जनाकीर्ण एव स्थाने नायकं लक्षीकृत्यान्यापदेशेन काचिद्वदति—आघाइ इति। प्रियावयवतुल्यं च वस्तु मनोविनोदाय भवतीति भावः। पुष्पाण्यामेव मत्यवयवं स्पर्शेन धर्मः। यो यत्रानुरक्तः स तदवयवसदृशेऽपि वस्तुनि स्पृहां करोतीति नीतिः। अवस्थाभेदादेकं वस्तु नानावस्थमापन्नमिति विचिन्त्य संसारे वदास्तव्यमिति युक्तिः ॥ ६४४ ॥

उअ ओल्लिज्जइ मोहं भुअंगकिंचीअ कडअलग्गाइ ।
ओज्झरधारासद्धालुएण सीसं वणगएण ॥ ६४५ ॥

पश्यार्द्रीक्रियते मोघं भुजङ्गकृत्तौ कटकलग्नायाम् ।
निर्झरधाराश्रद्धालुकेन[5] शीर्षं वनगजेन ॥

काचित्सुरतासक्ता दीर्घरमणार्थं वल्लभस्यान्यचित्ततां कुर्वती या वदति—उअ इति। मोघं निरर्थकं कटके पर्वतैकदेशे लग्नायां कृत्तौ चर्मणि कञ्चुके शीर्षम् ओल्लिज्जइ

१. Medini P. 207. V. 99-100.
२. स्पृशति is missing in P.
३. P. adds सं before स्थापयति.
४. प्रेक्षते for पश्यत P.
५. P. adds अपि केसरेण after ०पुष्पम्
६. पश्य सीयते for पश्यार्द्रीक्रियते P.
७. ०श्रद्धालुना for ०श्रद्धालुकेन P.

दीयते। निर्झरे या धारा तत्र श्रद्धालुना श्रद्धास्ता निर्झरोऽयमिति कृत्वा कञ्चुके शिरोदानं निरर्थकम्। एवं शीर्षे कञ्चुकस्पर्शो निषिद्ध इति धर्मः। संग्यादौ गुणे नीतिमता भ्रमो वारणीय इति नीतिः। यथा भुजङ्गमेन कृत्तिस्त्यज्यते तथा मिथ्याज्ञानङ्नाय योगिना यतनीयमिति युक्तिः॥ ६४५॥

कमलं मुअंतमहुअर ! पिक्ककइत्थाण गंधलोहेण।
आलेक्खलड्डुअं पामरो व्व छिविऊण जाणिहिसि॥ ६४६॥

कमलं मुञ्चन्मधुकर ! पक्वकपित्थानां गन्धलोभेन।
आलेख्यलड्डुकं पामर इव स्पृष्ट्वा ज्ञास्यसि॥

कमपि युवानं दयितामुत्तमामपहाय पामरीरताकाङ्क्षिणं ज्ञात्वा कापि प्रविष्ठिता सत्स्नेहोपदेशेन तं निषेधयति—कमलं मुअंतमहुअरेति। पक्वानां कपित्थानां कपथ इति प्रसिद्धानां वृक्षविशेषफलानां गन्धस्य लोभेन मधुकर कमलं मुञ्चन् ज्ञास्यसि। पामरो यथा आलेख्यलड्डुकं मुञ्चन् न जानाति तथेत्यर्थः। यथा चित्रस्थं लड्डुकमकिञ्चित्करं ज्ञात्वा पामरो निवर्तते तथा त्वमपि निर्गुणां स्त्रियं त्यक्ष्यसीति भावः। साधुपरिहारोऽमज्जन-सक्ष्महोऽधर्मजनक इति धर्मः। वस्तुतत्त्वं प्रतिसन्धाय प्रवर्तनीयमिति नीतिः। संसारमूलं स्त्रियस्तेन वा विहाय योगाभ्यासो विधेय इति युक्तिः॥ ६४६॥

गिज्जंते मंगलगाइआहि वरगोत्तदिण्णअण्णाए।
सोउं व णिग्गओ उअह होंतवहुआइ रोमंचो॥ ६४७॥

गीयमाने[2] मङ्गलगायिका[3]भिर्वरगोत्रदत्तकर्णायाः।
श्रोतुमिव निर्गतः पश्यत भविष्यद्वधूकायाः[4] रोमाञ्चः॥

रतासक्ता काचिन्नायिका दीर्घसमयार्थं वज्रभस्यान्यचित्तत्वं कुर्वती वदति—गिज्जंत इति। भविष्यन्ती या वधूस्तस्या रोमो मङ्गलगायनीभिर्गीयमानानि श्रोतुमिव निर्गतः। प्रतिवेशिनी कामपि कुमारीमभिसारिकां ज्ञात्वा तामुपहसन्ती स्वसख्या इदं वा कथयति। मङ्गलार्थं मङ्गलगीतं श्रोतव्यमिति धर्मः। उत्साहे अनुत्साहे च हर्षः प्रकाश्यो जिगीषुणेति नीतिः। योगिना रोमाञ्चादि दृष्ट्वा निर्गन्तव्यं तत्र न स्यातव्यमिति युक्तिः॥ ६४७॥

१. ०लड्डुकं for लड्डुकम् P.
२. गीयमानानि for गीयमाने P.
३. ०गायनी० for ०गायिका० P.
४. ०द्वध्वा for ०द्वधूकाया P.

मण्णे आअण्णंता आसण्णविवाहमंगलुग्गीअं ।

तेहिं जुआणेहिं समं हसंति मं वेअसकुडंगा ॥ ६४८ ॥

मन्ये आकर्णयन्त[1] आसन्नविवाहमङ्गलोद्गीतम् ।

तैर्युवभिः[2] समं हसन्ति मां वेतसनिकुञ्जाः ॥

कापि कौमार एव येन सममासक्ता । न च वरदरेन तस्या गुरुभ्या समर्प्या-पितोऽनन्तरं स्वविवाहसमये मङ्गलानि श्रुत्वा स्वयं सखेदितं स्वगतम्याः कथयति— मन्ये इति । मन्ये उत्प्रेक्षे । आसन्नविवाहमङ्गलोद्गीतमाकर्णयन्तो वेतसनिकुञ्जास्तेन यूना समं मामुपहसन्ति । असमयाद एव यूनो रमणं स्मृतमनन्तरं तयोः परिणय इतिहास-बीजम् । विवाहे मङ्गलोद्गीतं श्रोतव्यमित्याचार इति धर्मः । अयुक्तकारी सर्वैरेवोपहस्यत इति तस्य विधेयमिति नीतिः । अचेतना अज्ञा अपि स्वनीयपुरुषार्थमुपहसन्तीति न च धर्मनीय इति युक्तिः ॥ ६४८ ॥

ऊमगअचउत्थिमंगलहोंतविओअसविसेसलग्गेहिं ।

तीअ वरस्स अ सेअंसुएहिं रुण्णं व हत्थेहिं ॥ ६४९ ॥

उपगतचतुर्थीमङ्गलभविष्यद्वियोगसविशेषलग्नाभ्याम् ।

तस्या वरस्य च स्वेदाश्रुभी रुदितमिव हस्ताभ्याम् ॥

कयोश्चिद्वधूवरयोश्चतुर्थीकर्मणि क्रियमाणे हस्तसंयोगसात्त्विकविकारैः स्वेदोद्भेदे जाते काचिदन्या कमप्युद्दिश्य समुत्प्रेक्षमाणा वदति—उअगअ इति । उपगते चतुर्थीमङ्गले एव भविष्यता वियोगेन विरहेण सविशेषं लग्नाभ्यां तस्या वरस्य च हस्ताभ्यां स्वेदाश्रुभी रुदितमिवेत्युत्प्रेक्षा । विवाहानन्तरमवश्यं चतुर्थी कर्तव्येति धर्मः । चतु-र्थिदिनेऽभ्युत्थान एवेति नीतिः । उत्साहसमनन्तरमेव विवाहोत्तविनाशान्तसंसारे सर्वमेवोत्सा-स्वम्यमिति युक्तिः ॥ ६४९ ॥

णअ दिट्ठिं णेइ मुहं णअ छिविउं देइ णा लवइ किं पि ।

तह वि हु किं पि रहस्सं णववहूसंगो पिओ होइ ॥ ६५० ॥

न च दृष्टिं नयति मुखं न च स्प्रष्टुं ददाति नालपति किमपि[3] ।

तथापि खलु किमपि रहस्यं नववधूसङ्गः[4] प्रियो भवति ॥

कश्चिन्नागरो नववधूना सह मिलितं स्वं सखायमुद्दिश्य वदति—णअ दिट्ठिमिति । नच नैव । किमप्यनिर्वचनीयं रहस्यं गोप्यम् । नववधूनामभ्रेव माइमिदो धर्म इते

---

१. आकर्णयन्ति for आकर्णयन्ते P.

२. तेन यूना for तैर्युवभिः P.

३. कमपि for किमपि P.

४. ० सार्थः for ०सङ्गः P.

धर्मः। सार्थः सर्व एव प्रियो भवति तथा नीतिमता विधेयमिति नीतिः। कामिनां स्त्रिय आदरणीया न तु योगिनामिति युक्तिः॥ ६५०॥

अलिअपसुत्तवलंतम्मि णववरे णववहूअ वेवंतो।
संवेल्लिओरुसंजमिअवत्थगण्ठि गओ हत्थो॥ ६५१॥

अलीकप्रसुप्तवलमाने[1] नववरे[2] नववध्वा वेपमानः।
संवेल्लितोरुसंयमितवस्त्रग्रन्थि गतो हस्तः॥

काचिन्नवोढाऽलीकप्रसुप्तं प्रियं परावृत्य वस्त्रमाकर्ष्टुकाममवगम्य सकम्पचलदूरुवस्त्रग्रन्थि हस्तेन धृतवतीत्येकाऽपरस्याः कथयति—अलिअ इति। वलति परावर्तमाने। संवेल्लितौ अर्धाद्वेष्य प्रकाशितौ यावूरू तयोः संयमितं संस्थापितं यद्वस्त्रं तस्य ग्रन्थि हस्तो गत इति। स्त्रीणां लज्जैव भूषणमिति तासां धर्म इति धर्मः। स्त्रीभिश्च लज्जैव विधेयेति नीतिः। सर्वमेतदलीकमवगम्य वराकस्तन्यं संसार इति युक्तिः॥६५१॥

पुच्छिज्जंती ण भणइ गहिआ पप्फुरइ चुंविआ रुअइ।
तुण्हिक्का णववहुआ कआवराहेण उवऊढा॥६५२॥

पृच्छ्यमाना न भणति गृहीता प्रस्फुरति[3] चुम्बिता रोदिति।
तूष्णीका नववधूः कृतापराधेनोपगूढा॥

कृतापराधेन प्रत्नादिनाऽनुनीयमानायाश्चेष्टामपरस्याः कापि कथयति—पुच्छिज्जंती इति। कृतापराधेन कान्तेन उपगूढा नववधू रोदिति। प्रस्फुरति प्रकर्षेण सञ्चरति। स्फुर सञ्चलने धातुः। तूष्णीका मौनमापन्ना। नववधूनामयमेव धर्म इति धर्मः। कृतापराधे न विश्वस्तव्यमिति नीतिः। एवं संसारे नानावस्थां विचिन्त्य योगिना व्यवहर्तव्यमिति युक्तिः॥६५२॥

तत्तो च्चिअ होंति कहा विअसंति तहिं तहिं समप्पंति।
किं मण्णे माउच्छा एक्कजुआणो इमो गामो॥६५३॥

तत एव[4] भवन्ति[5] कथा विकसन्ति[6] तत्र तत्र[7] समाप्यन्ते।
किं मन्ये मातृष्वस[8] एकयुवकोऽयं[9] ग्रामः॥

---

१. ०प्रसुप्ते चलवति for ०प्रसुप्तवलमाने P.
२. नव is missing in P.
३. परिस्फुरति for प्रस्फुरति P.
४. तत्रैव for तत एव P.
५. निर्गच्छति for भवन्ति P.
६. विकासन्ति for विकसन्ति P.
७. तत्रैव for तत्र P.
८. ०स्वस for ०ष्वस P.
९. एकोऽसौ for एकयुवकोऽयम् P.

काचित्स्थानान्तरादागता कुग्रामं निन्दन्ती मातृस्वसारं चलवृत्ता वदति—तत्तो विश्व इति । तत्रैव ग्रामे निर्गच्छन्ति वहिर्भवन्ति । किं मन्ये किमवगच्छामि । धर्मकथा धार्मिक एव समाप्यत इति धर्मः । एवं मन्त्रयितव्यं यथाऽन्यो नावगच्छतीति नीतिः । तत्रैव ब्रह्मविद्या सर्वे समाप्यत इति युक्तिः ॥६५३॥

जाइं वअणाइं अम्हे वि जंपिमो ताइं जंपइ जणो वि ।
ताइं चिअ तेण पजंपिआइं हिअअं सुहावेंति ॥६५४॥

> यानि[1] वचनानि वयमपि[2] जल्पामस्तानि जल्पति जनोऽपि ।
> तान्येव तेन प्रजल्पितानि हृदयं सुखयन्ति ॥

कापि कमपि युवानमुद्दिश्य स्वीयमनुरागं सख्याः कथयति—जाइं इति । जनः कान्त एव, तेन कान्तेन तान्येव प्रजल्पितानि हृदयं ममार्थात् सुखयन्तीति । यान्येव पुराणादीनि व्यासादयो जल्पन्ति तान्येव लोको जल्पति तेनैव व्यवहरतीति धर्मः । ईश्वरेण च तथा वक्तव्यं यथा सेवकोऽपि तदनुवर्तत इति नीतिः । एकमेवाद्वितीयं ब्रह्मेत्यादि हृदयं सुखयतीति युक्तिः ॥ ६५४ ॥

सव्वाअरेण मग्गह पिअं जणं जइ सुहेण वो कज्जं ।
जं जस्स हिअअदइअं तं ण सुहं जं तहिं णत्थि ॥६५५॥

> सर्वादरेण मृगयध्वं[3] प्रियं जनं यदि सुखेन वः कार्यम् ।
> यद्यस्य हृदयदयितं तन्न सुखं यत्तत्र नास्ति ॥

काचिन्नायिका कमपि नायकमुद्दिश्य स्वकीयानुरागं सख्याः कथयति—सव्वाअरेणेति । मार्गयत प्रार्थयत । यद् येषां हृदयदयितं तत् तत्र नास्ति अपि त्वस्त्येव यत्सुखं तत्तत्र प्रियेऽस्त्येवातस्तं सर्वथा मार्गयतेति । यदि सुखेन कार्यं तदा प्रियं प्रकरणाद्धर्ममन्वेषयतेति धर्मः । प्रियो जनः संवर्द्धनीय इति नीतिः । येषां सुखेन सांसारिकेण कार्यं ते प्रियं जनम् अनुसन्दधतु, न तु योगिनामिति युक्तिः ॥६५५॥

दीसंतो दिट्ठिसुहो चिंतिज्जंतो मणवल्लहो अच्चा ।
उल्लावंतो सुइसुहो पिओ जणो णिच्चरमणिज्जो ॥६५६॥

---

1. यानि is repeated in P.
2. वयं प्रजल्पामहे तान्येव for वयमपि जल्पामस्तानि P.
3. मार्गयत for मृगयध्वम् P.

दृश्यमानो[1] दृष्टिसुभगश्चिन्त्यमानो[2] मनोवल्लभः स्वैरं[3] ।

उल्लाप्यमानः[4] श्रुतिसुभगः प्रियो जनो नित्यरमणीयः ॥

काचिदुत्तमा दयिते स्वानुरागातिशयं भगिनीं वदति—दीसंतेति । दृश्यमानश्चासौ दृष्टिसुभगश्चेति कर्मधारयः । अन्यत्राप्येवम् । उल्लाप्यमानः श्रुतिसम्भाष्यमाणः । चिन्त्यमानो धर्मः प्रियो भवतीति धर्मः । जनो यथा नित्यं प्रियो भवति तथा विधेयमिति नीतिः । आनन्दरूपत्वाद् ब्रह्मणश्चिन्तनं श्रुतौ वेदे सुखं सुखहेतुत्वेनोपन्यस्तमिति युक्तिः । 'वेदे श्रवसि च श्रुतिः' इति कोषः[5] ॥६५६॥

ठाणब्भट्ठा परिगलिअपीणआ उण्णईअ परिचत्ता ।

अम्हे उण थेरिपओहर व्व उअरे च्चिअ णिसण्णा ॥६५७॥

स्थानभ्रष्टाः परिगलितपीनका उन्नत्या परित्यक्ताः ।

वयं पुनः स्थविरा[1] पयोधरा इवोदर[2] एव निषण्णाः ॥

कस्यापि द्वे भार्ये तत्रैका प्रौढा सुभगा सगर्वा चापरा बाला । तत्रेत्थं क्रमेणाप-मानिताऽतिकृशाऽऽत्मानं लक्ष्यीकृत्य वदति—ठाणेति । स्थानादर्थादुचितस्थानाद् भ्रष्टाः । परिगलितः पीनकः पीनत्वं पुष्टत्वं यासां ता वयम् । उन्नत्या मानेन परित्यक्ता एतादृशा वयं पुनरुदरेऽभ्यन्तरेऽर्थाद् गृहादेरेव निषण्णा निर्व्यापारा उपविष्टाः, यथा स्थविरा जरन्तः पयोधरा उदरे जठरे एव निषण्णा भवन्ति तथेत्यर्थः । उन्नतिरत्रोच्छ्राय ऊर्ध्व-स्थितिः । स्वार्थे कनि पीनकेति । धार्मिकाः स्थानादाश्रमात् परिभ्रष्टाः कृशाः सन्तो धर्ममाचरन्तीति धर्मः । स्थानभ्रंशो यथा न भवति तथा विधेयम् । तदुक्तम्—'स्थानभ्रष्टा न शोभन्ते दन्ताः केशा नखा नराः' इति नीतिः । स्थविरा वृद्धाः स्थानान्निजाश्रमाद् भ्रष्टा उदरे पर्वतादेर्ध्यानार्थं निषण्णा भवन्तीति युक्तिः ॥ ६५७ ॥

विपरीतसुरतलम्पट[1] ! पृच्छसि मम[2] किमिति गर्भसम्भूतिम् ।
अपवृत्ते[3] कुम्भमुखे जललवकणिकाऽपि किं तिष्ठति ॥

काचित्केनापि पृष्टा त्वमसि खिन्नेति सा तद्वचने वदति—विवरीअ इति । अवलम्बिते अधनीकृते । अवचे इति पाठे तत्र अपवृत्ते अधोमुखीकृते इत्येवार्थः । सम्भूतिरुत्पत्तिः ।(?) सत्यैवाहमतः क्रियमाणे विपरीतरते गर्भभ्रंश एव स्यादिति भावः विपरीतं रतं नाचरणीयं तत्र क्लीबोत्पत्तिः स्यादिति धर्मः । उक्तैश्च तथा विधेयं यथा सन्ततिर्न जायत इति नीतिः । मुमुक्षुः कथं गर्भवार्तां पृच्छति, गर्भदानाय परं यतते इति मुक्तिः ॥६५८॥

अच्चासण्णविवाहे समं जसोआइ तरुणगोवीहिं ।
वड्ढते महुमहणे संबंधा णिण्हुविज्जंति ॥ ६५९ ॥

अत्यासन्नविवाहे[4] समं यशोदया तरुणगोपीभिः ।
वर्धमाने मधुमथने सम्बन्धा निह्नूयन्ते ॥

वर्धमाने भगवति कृष्णे तरुणीभिर्गोपीभिः कृष्णलोभेन यशोदया समं सम्बन्धगोपनं क्रियते इत्येकाऽपरस्याः कथयति—अच्चासण्णे इति । यशोदाया गोपीनाञ्च कुलेऽत्यासन्नेऽव्यवहितेऽपि सम्बन्धा निह्नूयन्ते । यैः सम्बन्धैः श्रीकृष्णः स्वामी भवितुं नार्हति तत्प्रकाशने श्रीकृष्णः पतिरेव न स्यादिति भावः । अत्यासन्नकुलयोः सम्बन्धगोपनं निषिद्धमतस्तन्न विधेयमिति धर्मः । सन्ध्यादौ षाड्गुण्ये विनिह्नवोऽलापः कर्तव्यः । तदुक्तं मुद्रायां 'धन्या केयम्[6]' इत्यादि नीतिः । मधुमथने श्रीकृष्णे सम्बन्धाः सम्यक्त्वोऽतिशयिता धन्याः सांसारिका निह्नूयन्तेऽपलप्यन्त एव यतस्ते न तिष्ठन्तीति मुक्तिः ॥ ६५९ ॥

जं जं आलिहइ मणो आसावट्टीहि हिअअफलअम्मि ।
तं तं बालो व्व विही णिहुअं हसिऊण पम्हुसइ ॥ ६६० ॥

यद्यदालिखति मन[7] आशावर्तिकाभिर्हृदयफलके ।
तत्तद् बाल इव विधिर्निभृतं हसित्वा प्रोञ्छति ॥

काचित्कमप्यनुरागपात्रं प्राप्तुं यन्मनोरथं कृतवती तद्दैवयोगेन वमप्रमुपलभ्य

1. ०लुब्धक for ०लम्पट P.
2. मम is missing in P.
3. अवलम्बिते for अपवृत्ते P.
4. अत्यासन्नेपि कुले for अत्यासन्नविवाहे P.
5. सम्बन्धानिह लूयन्ते for सम्बन्धा निह्नूयन्ते P.
6. Mudrārākṣasa I. 1.
7. जन for मन P.
8. ०पट्टिमि० for ०वर्तिकाभि० P.

दृश्यमानो[1] दृष्टिसुख[2]श्चिन्त्यमानो[3] मनोवल्लभः स्वश्रु[4]।
उल्लप्यमानः[5] श्रुतिसुखः प्रियो जनो नित्यरमणीयः ॥

काचिदुत्तमा दयिते स्वानुरागातिशयं भगिनीं वदति—दीसंतेति । दृश्यमानश्चासौ दृष्टिसुभगश्चेति कर्मधारयः । अन्यत्राप्येवम् । उल्लाप्यमानः श्रुतिसम्भाष्यमाणः । चिन्त्यमानो धर्मः प्रियो भवतीति धर्मः । जनो यथा नित्यं प्रियो भवति तथा विधेयमिति नीतिः । आनन्दरूपत्वाद् ब्रह्मणश्चिन्तनं श्रुतौ वेदे सुखं सुखहेतुत्वेनोपन्यस्तमिति युक्तिः । 'वेदे श्रवसि च श्रुतिः' इति कोषः[6] ॥६५६॥

ठाणब्भट्ठा परिगलिअपीणआ उण्णईअ परिचत्ता ।
अम्हे उण ठेरिपओहर व्व उअरे च्चिअ णिसण्णा ॥६५७॥

स्थानभ्रष्टाः परिगलितपीनका उन्नत्या परित्यक्ताः ।
वयं पुनः स्थविराः[7] पयोधरा इवोदर एव[8] निषण्णाः ॥

कस्यापि द्वे भार्ये तत्रैका प्रौढा सुभगा सगर्वा चापरा बाला । तत्रेत्थं क्रमेणाप-मानिताऽतिकृशाऽऽत्मानं लक्ष्यीकृत्य वदति—ठाणेति । स्थानादर्थादुचितस्थानाद् भ्रष्टाः । परिगलितः पीनकः पीनत्वं पुष्टत्वं यासां ता वयम् । उन्नत्या मानेन परित्यक्ता एतादृशा वयं पुनरुदरेऽभ्यन्तरेऽर्थाद् गृहादेरेव निषण्णा निर्व्यापारा उपविष्टाः,यथा स्थविरा जरन्त्यः पयोधरा उदरे जठरे एव निषण्णा भवन्ति तथेत्यर्थः । उन्नतिरत्रोच्छ्राय ऊर्ध्व-स्थितिः । स्वार्थे कनि पीनकेति । धार्मिकाः स्थानादाश्रमात् परिभ्रष्टाः कृशाः सन्तो धर्ममाचरन्तीति धर्मः । स्थानभ्रंशो यथा न भवति तथा विधेयम् । तदुक्तम्—'स्थानभ्रष्टा न शोभन्ते दन्ताः केशा नखा नराः' इति नीतिः । स्थविरा वृद्धाः स्थानान्निजाश्रमाद् भ्रष्टा उदरे एव गृहादेरभ्यन्तरार्थे निषण्णा भवन्तीति युक्तिः ॥ ६५७ ॥

वित्तरीअह्मरअलेहड ! पुच्छसि मह कीस गब्भसंभूइं ।
ओअत्ते कुम्भमुहे जललवकणिआ वि किं ठाइ ? ॥ ६५८ ॥

१. दृश्यमान० for दृश्यमानो P.
२. ०सुभग० for ०सुख० P.
३. ०श्चिन्त्यमान० for ०श्चिन्त्यमानो P.
४. भगिनि for स्वश्रु P.
५. तत्राप्यश्रुति० for उल्लप्यमानः श्रुति० P.
६. Amara III. 3. 73.
७. स्थविर० for स्थविराः P.
८. एव is missing in P.

विपरीतसुरतलम्पट![1] पृच्छसि मम[2] किमिति गर्भसम्भूतिम्।
अपवृत्ते[3] कुम्भमुखे जललवकणिकाऽपि किं तिष्ठति ॥

काचित्प्रियेनापि पृष्टा त्वमसि गिर्भेति सा तद्वचने वदति—विपरीत इति। अपलम्बिते अपनीकृते। अपवृत्ते इति पाठे तत्र अपवृत्ते अधोमुखीकृते इत्येषार्थः। सम्भूतिरुत्पत्तिः।(?) सत्यैवाद्यमतः क्रियमाणे विपरीतरते गर्भभ्रंश एव स्यादिति भावः विपरीतं रतं नाचरणीयं तत्र स्त्रीबोत्पत्तिः स्यादिति धर्मः। उक्तैश्च तथा विधेयं यथाऽधनतिनं जायत इति नीतिः। मुमुक्षुः कथं गर्भवार्तां पृच्छति, गर्भहानाय परं यतते इति मुक्तिः ॥६५८॥

अच्चासण्णविवाहे समं जसोआइ तरुणगोवीहिं।
वड्ढते महुमहणे संबंधा णिण्हुविज्जंति ॥ ६५९ ॥

अत्यासन्नविवाहे[4] समं यशोदया तरुणगोपीभिः।
वर्धमाने मधुमथने सम्बन्धा निह्नूयन्ते ॥

वर्धमाने भगवति कृष्णे तरुणीभिर्गोपीभिः कृष्णालोभेन यशोदया समं सम्बन्धगोपनं क्रियते इत्येकाऽपरस्याः कथयति—अच्चासण्णे इति। यशोदायाः गोपीनाञ्च कुलेऽत्यासन्नेऽप्यवहितेऽपि सम्बन्धा निह्नूयन्ते। यैः सम्बन्धैः श्रीकृष्णः स्वामी भवितुं नार्हति तत्प्रकाशने श्रीकृष्णः पतिरेव न स्यादिति भावः। अत्यासन्नकुलयोः सम्बन्धगोपनं निषिद्धमतस्तत्र विधेयमिति धर्मः। सन्ध्यादौ पादगुण्ये विनिहवोऽलापः कर्तव्यः। तदुक्तं मुद्रायां 'धन्या केयम्'[6] इत्यादि नीतिः। मधुमथने श्रीकृष्णे सम्बन्धाः सम्यग्घोऽनिरायिता धन्याः सांसारिका निह्नूयन्तेऽपशप्यन्त एव यतस्ते न तिष्ठन्तीति मुक्तिः ॥ ६५६ ॥

जं जं आलिहइ मणो आसावट्टीहि हिअअफलअम्मि।
तं तं बालो व्व विही णिहुअं हसिऊण पम्हुसइ ॥ ६६० ॥

यद्यदालिखति मन[7] आशावर्तिकाभिर्हृदयफलके।
तत्तद् बाल इव विधिर्निभृतं हसित्वा प्रोञ्छति ॥

काचित्कमप्यनुरागपात्रं प्राप्तुं यन्मनोरथं कृतवती तदैवयोगेन यथाप्रमुपलभ्य

---

[1] ०लुब्धक for ०लम्पट P.
[2] मम is missing in P.
[3] अवलम्बिते for अपवृत्ते P.
[4] अत्यासन्नेऽपि कुले for अत्यासन्नविवाहे P.
[5] सम्बन्धानिह्नूयन्ते for सम्बन्धा निह्नूयन्ते P.
[6] Mudrārākṣasa I. 1.
[7] जन for मन P.
[8] ०हृदि०ि० for ०वर्तिकाभिः P.

दैवमेवोपालभमाना वदति—जं जमिति । आशा प्रत्याशा तस्याः पङ्क्तिभिः परम्पराभिर्हृदयं फलकमिव। फलकं चित्रकम् । फलकं यत्प्रमेयमालिखति तत्तन्निभृतं हसित्वा विधिः प्रोञ्छयति । यथा बालः शिशुर्यद् यत् फलकादौ लिखति तत्तन्निभृतं हसित्वा प्रोञ्छयति तथेत्यर्थः । तदुक्तम्—

हृत्पट्टके यद्यदहं लिखामि तत्तद्विधिः प्रोञ्छति सावधानः ।
अत्यन्तलोपान्मलयो त्विदानीं लेखोपि नोदेति मनोरथस्य ॥

इत्येवं सति यथा सन्तुष्टो भवति तथा धर्मोऽर्जनीय इति धर्मः । क्रियायां प्रतिकूले विधौ मनोरथोऽपि न विधेय इति नीतिः। संसारे मनोरथोऽपि योगिना न विधेय इति युक्तिः॥६६०॥

अणुहुत्तो करफंसो सअलअलापुण्ण ! पुण्णदिअहम्मि ।
वीआसंगकिसंगअ ! एण्हिं तुह वंदिमो चलणे ॥ ६६१ ॥

अनुभूत.[1] करस्पर्शः सकलकलापूर्ण ! पुण्यदिवसे ।
द्वितीयासङ्गकृशाङ्ग[2] ! इदानीं तव वन्दामहे[3] चरणौ ॥

अन्यनायिकासक्तमन्यनायकमुद्दिश्य कापि नायिका तमेव नायकं करेण स्पृशन्तं चन्द्रापदेशेन वदति—अणुहुत्तो इति । अनुभूतः करस्य हस्तस्य स्पर्शो यस्य स त्वम् ! वीतस्त्यक्त आसङ्गोऽर्थान्मयि यस्य तादृश हे कृशाङ्ग ! तव चरणौ पूर्णदिवसे वन्दामीत्यन्वयः । सकला सम्पूर्णा या कला तया पूर्णम् । पुण्यसमये नमस्कारादे रतिफलजनकत्वम् इति तदुक्तम् । इदानीं नमस्करणीयोसीति सोल्लुण्ठं सम्बोधनम् । चन्द्रपक्षे-पूर्णिमादिवसे । सकलकलापूर्ण ! अनुभूतवीतस्समाप्तः आ समन्तत सङ्गो यत्र ॥ कृष्णपक्षस्तत्र कृशाङ्ग ! हे चन्द्र ! तव चरणौ वन्दाम इत्यन्वयः । देवस्य चन्द्रादेर्नमस्कार इति धर्मः । बलीयसो नतिरेव कृत्यकरीति नीतिः । वीतासङ्गत्वेन...[4] रिक्तवन्य ! तव चरणौ वन्दाम इति कोऽपि योगिनं नमस्करोतीति युक्तिः ॥ ६६१ ॥

दूरंतरिए वि पिए कह त्ति णिअत्ताइ मज्झ णअणाइं ।
हिअअं उण तेण समं अज्ज वि अणिवारिअं भमइ ॥६६२॥

दूरान्तरितेऽपि[5] प्रिये कथमपि निवर्तिते[6] मम[7] नयने ।
हृदयं पुनस्तेन सममद्याप्यनिवारितं भ्रमति ॥

---

१. ०तकर० for ०तः कर० P.
२. वीत... for द्वितीयासङ्गकृशाङ्ग P.
३. वन्दामस्तव for तव वन्दामहे P.
४. A few syllables are missing here.
५. पि पि is missing in P.
६. निवृत्ते for निवर्तिते P.
७. अस्माकं for मम P.

कापिलप्रवासयात्रायां गच्छन्तं पतिमुद्दिश्य सखीमपदिश्य व्याजरूपां निवेदयन्ती वदति—दूरंतरिए इति। दूरमन्तरिते व्यवहिते। दृढः परम्परानुरागो धर्म इव भवतीति धर्मः। नीतिमना [illegible] तया व्यवहर्तव्यं यथा सति यादृशिः मम हृदयं सक्तं भवतीति नीतिः। प्रिये आनन्दरूपे व्यवहितेऽपि हृदयं योगिनां तत्रैवानिवारितं तिष्ठतीति युक्तिः ॥ ६६२ ॥

तस्स कहाकण्टइए सद्दाअण्णणसमोसरिअकोवे।
समुहालोअणकंपिरि ! उवऊढा किं पवज्जिहिसि ? ॥ ६६३ ॥

तस्य कथाकण्टकिते शब्दाकर्णनसमपसृतकोपे।
सम्मुखालोकनकम्पनशीले उपगूढा किं प्रपत्स्यसे ?[1] ॥

कामपि कामिनीं मालिनीमुद्दिश्य तस्या एव सखी मुग्धां प्रियंवदा वदति—वत्सेति। अपि तु न भविष्यसीत्यर्थः। कथाकण्टकित इत्यादि त्रयं सम्बोधनान्तं तादृशि हे। उपगूढा आलिङ्गिता किं विलायिष्यसि विलीना भविष्यसि। विलीनाऽनारिक्षताऽसम्बद्धा किं भविष्यसि। अपि तु न भविष्यसीत्यर्थः। वीत्युपसर्गो विरोधे हृष्यनत्वं इति दानेषु वर्तेत इत्युपसर्गवृत्तिः। नञर्थो विगुणो व्यङ्गः गुणशून्य इत्यर्थः, तेन प्रकृतेऽप्याश्लेषशून्येत्यर्थः। कण्टको रोमहर्षे द्रुमाङ्गे इति विश्वः[4]। शब्दस्य स्वस्कन्दस्याक...[5] समपसृतोऽपगतः कोपो यस्यास्तादृशि हे सम्मुखालोकनेन कम्पनशीले ! यस्या ईदृशो मान्मथिको विकारो दृष्टः सा कथमसम्बद्धा भवत्री भविष्यतीति भावः। स्वामिनि भावाविष्करणं स्त्रीणां धर्म एवेति धर्मः। प्रथमं विरक्तोऽनन्तरमालिङ्गितः सुप्रीत एव भवतीति नीतिः। एकस्या रोषतोषौ दृष्ट्वा संसारेऽनित्ये उदास्यमिति युक्तिः ॥ ६६३ ॥

भरणमिअणीलसाहग्गसलिअचलणद्धविहुअवक्खउडा।
तरुसिहरेसु विहंगा कह-कह वि लहंति संठाणं ॥ ६६४ ॥

भरनमितनीलशाखाग्रस्खलितचरणार्धविधुतपक्षपुटाः।
तरुशिखरेषु विहङ्गा कथ कथमपि लभ ते संस्थानम् ॥

---

१. प is missing in P.
२. ०धेपन० for ०कम्पन० P.
३. विलायिष्यसि for प्रपत्स्यसे P.
४. Cf. कण्टकः क्षुद्रशत्रौ च कर्मस्थानद्रोषयोः। रोमाञ्चे च द्रुमाङ्गे च कण्टको मत्स्येऽपि च P.13.V.135.
५. A few syllables are missing here.

कस्मिन्नपि निकुञ्जे सुरतासक्ता काचिद्दीर्घरमणार्थं प्रियस्यान्यचित्ततां कुर्वती सुरतविशेषमुपदिशन्ती वदति—भरणामिश्र इति । तस्याः शिखरेषु अग्रेषु कथं कथमपि विहङ्गा संस्थानमवस्थितिं लभन्ते । अत्र हेतुमाह—भरेणाऽर्थात् पक्षिणामेव गौरवेण नमितं नीडं कुलायः खोंधा इति ख्यातं यत्र तादृशि शाखाग्रे स्खलितं प्रतिहतमनवस्थितं चरणार्द्धं येषां तादृशा विघुता विमुक्ताः पक्षयोः पुटाः सम्बन्धाश्च येषामिति कर्मधारयगर्भो बहुव्रीहिः । अन्यचित्तताकरणप्रसङ्गे कामशास्त्रं कल्लोलिनीकाननकन्दरा इत्यादि । विहङ्गाः खेचरा यत्संस्थानमवस्थानमवस्थितिं लभन्ते तद्धर्मादेवेति धर्मः । यथा समीचीनं स्थानं लभ्यते तथा कर्तव्यमिति नीतिः । तदुपयानेषु शिखरेषु योगिन एव स्थानं लभन्त इति युक्तिः ॥ ६६४ ॥

अहरमहुपाणयोरिल्लिआइ जं च रमिओ सि सविसेसं ।
असइ अलज्जिरि बहुसिक्खिरि त्ति मा णाह ! मण्णिहिसि ॥६६५॥

अधरमधुपानलालसया यच्च[1] रमितोऽसि सविशेषम् ।
असती अलज्जाशीला बहुशिक्षितेति[2] मा नाथ ! मंस्थाः[3] ॥

असतीं निन्दयता केनापि पुरुषेण सह सङ्गता काचिद्वारस्त्री असतीमुत्कर्षयन्ती तमेव पुरुषमुद्दिश्य वदति—अहवेति । अथ कार्त्स्न्येऽवधारणे । तेनात्यर्थं मधुपाने लालसया सविशेषमेवासाधारणमेव यथा स्यादेवं यद्रमितोऽसि तेनासती निर्लज्जा, बहुधाप्रवर्तिनि वञ्चिचशीला इति नाथ ! मा भणिष्यसीत्यन्वयः । 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथोऽथ' इत्यमरः । वा स्याद्विकल्पोपमानयोरेवार्थे वा समुच्चय इति विश्व[7] । मकरन्दपानलालसातिशयविशेषरमितः।असती लज्जारहिता सृष्टि रति मा नाथ ! ज्ञास्यसीति पाठान्तरम् । अत्रार्थस्तु घटक एव । धार्मिकेण मधुपानादि न विधेयमिति धर्मः । जिगीषुणा मधुपानादि न विधेयमिति, तदुक्तं [8]...मृगयाभिरतिरित्यादि ( इति नीतिः ) । एवंविधा चर्चा योगिना न विधेयेति युक्तिः ॥६६५॥

खाणेण अ पाणेण अ तह गहिओ मंडलो अडअणाइ ।
जह जारं अहिणंदइ भुक्कइ घरसामिए एंते ॥ ६६६ ॥

---

1. ० घो० for ०धा० P.
2. अथवा for अधर० P
3. यद् for यच्च P.
4. ०शिक्षणशीलेति for ०शिक्षितेति P
5. भणिष्यसि for मंस्थाः P.
6. III 3. 247.
7. P. 189. V. 40. Vis'va reads ०ल्पोपमयो० for ०ल्पोपमानयो० and पि for second वा.
8. A few syllables are missing here; probably 'रतिरहस्ये' ?

खादनेन च[1] पानेन च तथा गृहीतो मण्डलोऽसत्या ।
यथा जारमभिनन्दति[2] भुक्कति गृहस्वामिन्येति[3] ॥

कयाचिदसत्या श्वा तथा शिक्षितो भक्ष्यभोज्यादिदानेन यथा जारमभिनन्दयति गृहस्वामिन्यागते शब्दं करोतीत्येकाऽपरस्या कथयति । कुक्कुरभयेन शिथिलोद्यमं कामुकमुत्साहयन्ती कुट्टनीदमाह वा—खायोयेति । खादनेन नानाभक्षणदानेन । मण्डलः कुक्कुरे देशी । अभिनन्दयति तदाऽऽगमनसमय एव भक्ष्यदानाद् । भुक्कति शब्दायते स्वामिन्यागच्छति तदा भक्ष्याभावादिति भाव. । हीनेष्वपि ग्रासो देय इति धर्मः । अभीष्टकार्यसम्पादनहेतोर्हीनजन्मनोऽप्यधीना भवन्ति । उचितकार्यमपि ग्रासमात्रस्य लाभाय्यतस्ते उपेक्षन्त इति नीतिः । योगिना तथा महोऽभ्यासो योगे विधेयो येनानन्दस्य ज्ञानं भवतीति युक्ति । 'मण्डल निग्रहे बिम्बे त्रिषु पुंसि तु कुक्कुरे' इति मेदिनी[4] ॥६६६॥

कंडंतेण अकंडं पल्लीमज्झम्मि विअडकोअंडं ।
पइमरणाहि वि अहिअं वाहेण रुआविआ अत्ता ॥६६७॥

कण्डूयता अकाण्डे[5] पल्लीमध्ये विकटकोदण्डम् ।
पतिमरणादप्यधिकं व्याधेन रोदिता श्वश्रूः[7] ॥

कश्चिद् व्याधपुत्रोऽसमर्थः, सोऽपि कथ जीविष्यतीति चिन्तया तन्मात्रा रुदितमिति ज्ञात्वा काऽपि कस्याश्चित् कथयति—कडतेयोति । कर्षता उत्कर्षता । पल्ली म्लेच्छनिवास , पाल्लिरिति ख्याता । पतिमरणादप्यधिक यथा स्यादेव व्याधेन माता रोदिता । अस्मत्पुत्रस्यायं धनुराकर्षरूपो व्यापारो वैराग्याय स्यात् तेन तज्जीविते संशयालुर्माता रुदितेति भाव । श्वश्रूरिति पाठे दुहितु. सौभाग्यस्यानाकलनात्सा रुदितेति भाव. । कोदण्डधन्वशरासनकार्मुकमित्यमरः । अनाकृष्टस्य धनुष आकर्षणा शूराणा धर्मः इति

१ च is missing in P

२. ०भिनन्दति जारम् for जारमभिनन्दति P.

३. ०न्यागत for ०न्येति P.

४ P. 209 V. 121. The full quotation is the following.— मण्डल परिधौ कोठेदेशे द्वादशराजसु । क्लीबेऽथ निवहे बिम्बे त्रिषु पुंसि तु कुक्कुरे ।

५. कर्षताऽनाकृष्टम् for कण्डूयता अकाण्डे P.

६ प्य is missing in P.

७ माता for श्वश्रू P.

८ See Weber कडतेण

९. Cf II 8 83 'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्'

धर्मः। सतां पत्नीमध्ये रोदनमेव भवतीति तैस्तत्र न वस्तव्यमिति नीतिः। यत्र संसारे गुणोऽपि दोषायेति तत्रोदास्तव्यमिति युक्तिः ॥ ६६७ ॥

अम्हे उज्जुअसीला पिओ वि पिअसहि ! विआरपरिओसो ।

ण हु अण्णा का वि गई वाहोहा कह पुसिज्जंतु ? ॥६६८॥

वयमृजुकशीलाः प्रियोऽपि[1] प्रियसखि ! विचारपरितोषः[2] ।

न खल्वन्या कापि[3] गतिर्बाष्पौघः कथं प्रोञ्छ्यताम् ?

बहुवनितोपभुक्तरसं विदग्धकान्तं रमयितुमसमर्था काप्यनुनयन्तीं सखीमाह— अम्हे इति। विचारेण परितोषो यस्य स प्रियः। आगतोऽपि प्रियो मयि विरक्त इति भावः। ततो बाष्पौघाः प्रसरन्त एव वर्तन्त इति। सत्यश्च विरक्तेऽपि प्रियेऽनुरक्ता एवेति धर्मः। अनन्यगतिकायां पत्युर्विद्वेषात्सन्तापो जायत इति नीतिः। योगिनां विरक्तानामेव बाष्पौघप्रोञ्छनत्यागो भवतीति युक्तिः ॥ ६६८ ॥

धवलोसि जइ वि सुंदर ! तह वि तुए मज्झ रंजिअं हिअअं ।

राअभरिए वि हिअए सुहअ ! णिहित्तो ण रत्तो सि ॥६७०॥[6]

धवलोऽसि[4] यद्यपि सुन्दर[5] ! तथापि त्वया मम रञ्जितं हृदयम् ।

रागभृतेऽपि हृदये सुभग ! निहितो न रक्तोऽसि ॥

काचित्कान्तेऽत्यन्तानुरागिणी तत्कान्तस्तस्यां विरक्तोऽन्यत्रासक्तश्च कान्तमेवोपालभते— धवलोसीति। श्लेषोक्तिरियम्। वृषश्रेष्ठ सुन्दरे च धवल इति मेदिनी[6]। सुशोभनो भगो धर्मो यस्य तेन हृदयमनुरज्यत एव।

ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः।

वैराग्यस्य च मोक्षस्य षण्णां भग इति स्मृत. ॥

इति धर्मः। यथा मनोरञ्जनं जायते तथा विधेयमिति धर्मः। भ्रान्तिभाजः कस्यापि विवेको न भवतीति नीतिः। भ्रमरायां खिङ्गानां कुलं गन्धेन कस्तूरिकादिभवेनान्धं सद् भ्रमति नतु योगिकुलमिति युक्तिः ॥ ६७० ॥[7]

---

१. प्रिय is missing in P.
२. विकार० for विचार० P.
३. अपि for कापि P.
४. असि is missing in P.
५. सुभग for सुन्दर P.
६ Cf. P 207. V 99-100.
७ P. assigns the figure 670, instead of 669, to this verse It thus obviously omits the verse 669.

एत्थ णिमज्जइ अत्ता एत्थ अहं एत्थ परिअणो सअलो ।
पंथिअ ! रत्तीअंधअ ! मा मह सअणे णिमज्जिहिसि ॥६७१॥

अत्र निमज्जति[1] श्वश्रूरत्राहमत्र परिजनः सकलः ।
पथिक ! रात्र्यन्धक ! मा मम शयने निमङ्क्ष्यसि[2] ॥

काप्यसत्यप्रसक्तप्रतिषेधं कुर्वाणा स्वाशयं पथिकयूने प्रकाशयति—एत्थ इति । निषीदतीति स्थानत्रयेऽन्वयि । मम शयने शय्यायां मा निषीदयिष्यसि । काक्वा निषण्ण एव भविष्यसि । अन्यशय्यायामन्येषां शयनं निषिद्धम्, 'आसनं वसनं शय्या' इत्यादि-श्रुतेरिति धर्मः । यस्तु विजिगीषुः स च शयनसुप्त एव न स्थास्यतीति नीतिः । रात्रौ अनुक्तसमये योगिनामपि (शयनं) निषिद्धम् इति युक्तिः ॥ ६७१ ॥

परिओससुंदराइं सुरएसु लहंति जाइ सोक्खाइं ।
ताइ च्चिअ उण विरहे खाउग्गिण्णाइ कीरंति ॥ ६७२ ॥

परितोषसुन्दराणि सुरतेषु[3] लभन्ते[4] यानि सौख्यानि ।
तान्येव[5] पुनर्विरहे खादितोद्गीर्णानि[6] कुर्वन्ति[7] ॥

संश्लेषे बहुतरदुःखं भुज्यते । विरहे महद् दुःखमित्यनुभूतसुखदुःखा काचित्सख्याः पुरतः स्वाभिप्रायं प्रकाश्य समाधत्ते—परिओसेति । परितोषेण सुन्दराणि समीचीनानि प्रथमं खादितानि अनन्तरमुद्गीर्णानि वान्तानि क्रियन्ते । यान्येव सुखानि पूर्वमनुभूतानि तान्येवाग्रे दुःखानि जायन्त इति भावः । असन्तुष्टा द्विजा नष्टा इति सर्वत्र सन्तोष एव विधेय इति धर्मः । सन्तोषात्सुखं लभ्यत इति नीतिः । एतादृशीं सांसारिकीमवस्थां दृष्ट्वा योगिभिरुदास्तव्यमिति युक्तिः ॥ ६७२ ॥

मग्गं च्चिअ अलहंतो हारो पीणुण्णआण थणआण ।
उव्विग्गो भमइ उरे जमुणाणइफेणपुंजो व्व ॥ ६७३ ॥

मार्गमिवालभमानो हारः पीनोन्नतयोः स्तनयोः ।
उद्विग्नो भ्रमत्युरसि यमुनानदीफेनपुञ्ज इव ॥

---

१. निषीदति for निमज्जति P.
२. निषीदयिष्यसि for निमङ्क्ष्यसि P.
३. पु is missing in P.
४. लभ्यन्ते for लभन्ते P.
५. [illegible] is missing in P.
६. ०द्गीर्णा० for ०द्गीर्णा० P.
७. क्रियन्ते for कुर्वन्ति P.
८. ०मेव वा for ०मिवा० P.
९. P. adds वा before हारः.
१०. ०न्नतानाम् for ०न्नतयोः P.
११. स्तनानाम् for स्तनयोः P.

धर्मः। सतां पत्नीमध्ये रोदनमेव भवतीति वैस्तत्र न वस्तव्यमिति नीतिः। यत्र संसारे गुणोऽपि दोषायेति तत्रोदास्तव्यमिति युक्तिः ॥ ६६७ ॥

अम्हे उज्जुअसीला पिओ वि पिअसहि ! विआरपरिओसो ।
ण हु अण्णा का वि गई वाहोहा कह पुसिज्जंतु ? ॥६६८॥

वयमृजुकशीलाः प्रियोऽपि प्रिय[1]सखि ! वि[2]चारपरितोषः ।
न खल्वन्या कापि[3] गतिर्बाष्पौघः कथं प्रोञ्छ्यताम् ?

बहुवनितोपभुक्तरसं विदग्धकान्तं रमयितुमसमर्था काप्यनुनयन्तीं सखीमाह— अम्हे इति। विचारेण परितोषो यस्य स प्रियः। आगतोऽपि प्रियो मयि विरक्त इति भावः। ततो बाष्पौघाः प्रसरन्त एव वर्त्तन्त इति। सत्यप्र विरक्तेऽपि प्रियेऽनुरक्ता एवेति धर्मः। अनन्यगतिकायां पत्युर्विद्वेषात्सन्तापो जायत इति नीतिः। योगिना विरक्तानामेव बाष्पौघप्रोञ्छनत्यागो भवतीति युक्तिः ॥ ६६८ ॥

धवलोसि जइ वि सुंदर ! तह वि तुए मज्झ रंजिअं हिअअं ।
राअभरिए वि हिअए सुहअ ! णिहित्तो ण रत्तो सि ॥६७०॥[7]

धवलोऽसि[4] यद्यपि सुन्द[5]र ! तथापि त्वया मम रञ्जितं हृदयम् ।
रागभृतेऽपि हृदये सुभग ! निहितो न रक्तोऽसि ॥

काचित्कान्तेऽत्यन्तानुरागिणी तत्कान्तस्तस्यां विरक्तोऽन्यत्रासक्तश्च कान्तमेवोपालभते—धवलोसीति। श्लेषोक्तिरियम्। वृषश्रेष्ठ सुन्दरे च धवल इति मेदिनी[6]। सुशोभनो भगो धर्मो यस्य तेन हृदयमनुरज्यत एव।

ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः।
वैराग्यस्य च मोक्षस्य षण्णां भग इति स्मृतः ॥

इति धर्मः। यथा मनोरञ्जनं जायते तथा विधेयमिति धर्मः। भ्रान्तिभाजः कस्यापि विवेको न भवतीति नीतिः। भ्रमराणां खिड्गानां कुलं गन्धेन कस्तूरिकादिभवेनान्य सद्भ्रमति नतु योगिकुलमिति युक्तिः ॥ ६७० ॥[7]

---

१. प्रिय is missing in P.
२. विका॰ for विचार॰ P.
३. अपि for कापि P.
४. असि is missing in P.
५. सुभग for सुन्दर P.
६ Cf. P 207. V 99-100.
७ P. assigns the figure 670, instead of 669, to this verse It thus obviously omits the verse 669.

एत्थ णिमज्जइ अत्ता एत्थ अहं एत्थ परिअणो सअलो ।
पंथिअ ! रत्तीअंधअ ! मा मह सअणे णिमज्जिहिसि ॥६७१॥

अत्र निमज्जति[1] श्वश्रूरत्राहमत्र परिजन सकल. ।
पथिक ! रात्र्यन्धक ! मा मम शयने निमङ्क्ष्यसि[2] ॥

काप्यसत्यप्रसक्तप्रतिषेध कुर्वाणा स्वाशय पथिकयूने प्रकाशयति—एत्थ इति । निषीदतीति स्थानत्रयेऽन्वयि । मम शयने शय्यायां मा निषीदिष्यसि । काका निषण्णा एव भविष्यसि । अन्यशय्यायामन्येषा शयन निषिद्धम्, 'आसन वसन शय्या' इत्यादि-श्रुतेरिति धर्म । यस्तु विजिगीषु स च शयनसुख एव न स्यास्यतीति नीति । रात्रौ अनुक्तसमये योगिनामपि (शयन) निषिद्धम् इति युक्ति ॥ ६७१ ॥

परिओससुंदराइ सुरएसु लहंति जाइ सोक्खाइ ।
ताइ चिअ उण विरहे खाउग्गिण्णाइ कीरंति ॥ ६७२ ॥

परितोषसुन्दराणि सुरतेषु[3] लभन्ते[4] यानि सौख्यानि ।
तान्येव[5] पुनर्विरहे खादितोद्गीर्णानि[6] कुर्वन्ति[7] ॥

सश्लेषे यद्बहुतरदु स भुज्यते । विरहे महद् दु खमित्यनुभूतसुखदु खा काचित्सख्या पुरत स्वाभिप्राय प्रकाश्य समाश्वस्ते—परिओसेति । परितोषेण सुन्दराणि समीचीनानि प्रथम खादितानि अनन्तरमुद्गीर्णानि वान्तानि क्रियन्ते । यान्येव सुखानि पूर्वमनुभूतानि तान्येवाग्रे दु खानि जायन्त इति भाव । असन्तुष्टा द्विजा नष्टा इति सर्वत्र सन्तोष एव विधेय इति धर्म । सन्तोषात्सुख लभ्यत इति नीति । एतादृशी सासारिकीमवस्था दृष्ट्वा योगिभिरुदास्तव्यमिति युक्ति ॥ ६७२ ॥

मग्ग चिअ अलहंतो हारो पीणुण्णआण थणआण ।
उव्विग्गो भमइ उरे जमुणाणइफेणपुंजो व्व ॥ ६७३ ॥

मार्गमिवालभमानो[8] हार[9] पीनोन्नतयो[10] स्तनयो[11] ।
उद्विग्नो भ्रमत्युरसि यमुनानदीफेनपुञ्ज इव ॥

१ निषीदति for निमज्जति P
२ निषीदिष्यसि for निमङ्क्ष्यसि P
३ पु is missing in P
४ लभ्यन्ते for लभन्ते P
५ पुन [illegible] missing in P
६ °दीर्णा° for °द्गीर्णा° P
७ क्रियन्ते for कुर्वन्ति P.
८ °मेव वा for °मिवा° P
९ P adds वा before हार
१० °न्नतानाम् for °न्नतयो P.
११ स्तनानाम् for स्तनयो P

यमुनानदीतटमहं गता त्वं न गत इति कापि सूचयति—मग्गं विग्न इति। पीनोन्नतस्तनानां कृते मार्गमेवालभमानो हार उद्विग्न ऊर्ध्वं विप्रचलितः सन् उरसि भ्रमति। अर्थाद् यमुनानदीफेनपुञ्ज इव हारः। कालिन्दीजलश्यामत्वेन भासमानस्य उपरि श्वैत्यमधिकमुपलभ्यते इति तत्राभिसन्धिः। ओ विजी भयचलनयोः,क्ते उद्विग्न इति। धर्ममार्गमलभमानो धार्मिक उद्विग्नो भवतीति धर्मः। यस्तु नीतिमान् स च सर्वेषामेव हृदये भ्रमतीति नीतिः। उद्विग्नानां प्रव्रज्यैव साधीयसी, यतो यदहरेवोद्विजेत्तदहरेव प्रव्रजेतेति युक्तिः ॥ ६७३ ॥.

एक्केण वि वडवीअंकुरेण सअलवणराइमज्झम्मि।

तह तेण कओ अप्पा जह सेसदुमा तले तस्स ॥ ६७४ ॥

एकेनापि वटबीजाङ्कुरेण सकलवनराजिमध्ये।

तथा तेन कृत आत्मा यथाऽशेषद्रुमास्तले तस्य ॥

एकोऽपि प्रौढः सुजातः सर्वमेव स्वाधीनं करोतीत्यन्यापदेशेन कापि वटवृक्षस्थानं सूचयति—एक्केणेति। तथा वटवृक्षः प्रवृद्धो यथाऽन्ये तत्तलेऽध एव स्थिता इत्यर्थः। तथाऽऽत्मा संवर्धनीयो यथाऽन्येऽधःकक्ष्यतां यान्तीति धर्मः। नीतिबीजाङ्कुरस्तथा चोत्पादनीयो यथा तेनान्ये विपक्षा अधःस्थिता भवन्तीति नीतिः। तपोवनमध्ये तथाऽऽत्मा रागादिविरक्तो विधेयो यथा अशेषाः सांसारिका अधःकक्ष्यतां यान्तीति युक्तिः ॥ ६७४ ॥

जे जे गुणिणो जे जे अ चाइणो जे विअड्ढविण्णाणा।

दारिद्द ! रे विअक्खण ! ताण तुमं साणुराओ सि ॥६७५॥

ये ये गुणिनो ये ये च[1] त्यागिनो ये विदग्ध[2]विज्ञानाः।

दारिद्र्य ! रे विचक्षण ! तान् त्वं सानुरागोऽसि ॥

काचिद्वारस्त्री केनापि धनिकेन कृपणेन सह सङ्गता तत्सकाशात् किमप्यप्राप्नुवन्ती सा च सात्त्विकं नायकं दातारं स्तुवन्ती वदति—जे जे इति। रे दारिद्र्य ! तान् गाथापूर्वार्द्धोक्तान् प्रतीत्यर्थम्। अनुरक्तोऽसि तेषु त्वं तिष्ठसि, ननु कृपणेषु तिष्ठसीत्यर्थः। तेषां दारिद्र्यानुपलब्धेः। समीचीने स्थानेऽवस्थितिरिति विचक्षणता। अथवाकारप्रश्लेषेणाविचक्षणेत्ययमप्यर्थ आयाति। ये च त्यागादियोगिनस्ते साधव इति धर्मः। ये च गुणिनस्त्यागिनस्तेषु जनानुरागो भवत्येवेति नीतिः। योगिनस्तु दरिद्रा एव भवन्तीति युक्तिः ॥ ६७५ ॥

---

१. च is missing in P. | २. ये पर्याप्त० for विदग्ध० P.

जइ कोत्तिओ सि सुंदर ! सअलतिहीचंददंसणसुहाणं ।
ता मसिणं मोइज्जंतकंचुअं पेक्खसु मुहं से ॥६७६॥

यदि कौतुकिकोऽसि[1] सुन्दर[1] ! सकलतिथिचन्द्रदर्शनसुखानाम् ।
तन्मसृणा[2] मोच्यमानकञ्चुकं प्रेक्षस्व[3] मुखं तस्याः[4] ॥

काप्युत्तमा स्त्री कमप्युत्तमं पुरुषं प्रति साभिलाषा स्वसखीं दूतीं प्रहितवती, तेन दूती पृष्टा कीदृशं तस्या रूपमिति, सा दूती तामुद्दिश्य वदति—जइ इति। कलाः षोडशार्थात्ताभिः सह वर्तते या तिथिः सा पौर्णमासी तस्यां यच्चन्द्रदर्शनं तज्जन्यानां सुखानां यदि कौतुकिकोसि तदा स्तनमस्याः प्रेक्षस्व। मसृणाम् अमुच्यमानं कञ्चुकं यत्र तं स्तनमिति। चन्द्रदर्शनेन धर्म एवेति धर्मः। नीतिमता शशावपि चन्द्रमाह्लादकं दर्शनं विधेयमिति नीतिः। यदि त्वं मुमुक्षुर्नासि तदा स्तनदर्शनमनुभूयताम् (इति) गुरोः शिष्ये उपालम्भ इति युक्तिः ॥ ६७६ ॥

समविसमणिव्विसेसा समंतओ मंदमंदसंचारा ।
अइरा होहिंति पहा मणोरहाणं पि दुल्लंघा ॥६७७॥

समविषमनिर्विशेषाः समन्ततो मन्दमन्द[5]सञ्चाराः ।
अचिराद्भविष्यन्ति[6] पन्थानो मनोरथानामपि दुर्लङ्घ्याः ॥

किमिति वर्षासु प्रियो नायातीति कामपि मुग्धां बोधयति—समविसमेति। अर्थात्तव प्रियस्य पन्थानः समे विषमे च निर्विशेषाः सदृशाः। कर्दमादिवशात् समन्ततो मन्दं मन्दं सञ्चारो यत्र। पन्थानः मनोरथानामपि दुर्लङ्घ्या अनतिक्रमणीया एतादृशा अचिरादेव भवन्ति भविष्यन्ति। अतो मा विषीदस्वेत्यार्थम्। धार्मिकाणामेवमेव भवन्तीति धर्मः। नीतिमन्तोऽपि मन्दमन्दसञ्चारा अविमर्शा त्वरया न किञ्चिदाचरन्तीति नीतिः। योगिनोऽपि समविषमनिर्विशेषा भवन्तीति युक्तिः ॥६७७॥

अइदीहराइं वहुए सीसे दीसंति वंसवत्ताइं ।
भणिए भणामि अत्ता ! तुम्हाण वि पण्डरा पुट्ठी ॥६७८॥

अतिदीर्घाणि वध्वाः शीर्षे दृश्यन्ते वंशपत्राणि ।
भणिते भणामि श्वश्रु[7] ! युष्माकमपि पाण्डुरं पृष्ठम् ॥

---

१. सकौतुकोऽस्यद्येत्र for कौतुकिकोऽसि सुन्दर P.
२. ०णोन्मुच्य० for ०णां मोच्य० P.
३. प्रेक्षय for प्रेक्षस्व P.
४. अस्याः for तस्याः P.
५. मन्दामन्द० for मन्दमन्द० P.
६. ०द्भवन्त्येव for ०द्भविष्यन्ति P.
७. मातः for श्वश्रु P.

गृहस्थस्य कस्यापि वधूः स्नुषा चासत्यौ, वंशनिकुञ्जे निर्व्यूढसुरतायाः शिरसि दीर्घाणि वंशपत्राणि दृष्ट्वा गृहस्थवध्वा भणितम्, तथा च तस्याः कृते भणितमित्यर्थं गाथा प्राह—अइ इति। गाथाप्रथमार्धोकान्यर्थात् त्वया भणिते हे मातर्भणामि यौष्माकमपि पाण्डुरं पृष्ठं जातमित्यावयोः समाधिः, नोपहासयोग्योऽहमित्यर्थः। प्रथमं न भणामि गौरवादनन्तरमुत्तरे न दोष इत्यभिसन्धिः। रमणेन धूलिधूसरं पृष्ठं जातमित्यर्थः। यौष्माकं त्वदीयम्। वधूभिर्लज्जा विधेयेति धर्मः। उपहासवचनं न सोढव्यमिति नीतिः। ईदृशो स्त्रीणां सांसारिके व्यवहारे योगिना उदास्तव्यमिति युक्तिः ॥ ६७८ ॥

अत्थक्करूसणं खणपसिज्जणं अलिअवअणणिब्बंधो।
उम्मच्छरसंतावो पुत्तअ! पअवी सिणेहस्स ॥६७९॥

आकस्मिकरोपकरणं[1] क्षणप्रसादनमलीकवचननिर्बन्धः।
उन्मत्सर[2]सन्तापः पुत्रक! पदवी स्नेहस्य ॥

कस्यचिन्नायकस्य कयाचिन्नायिकया अनुरागविपयस्याकस्मिकरोपेणालीकवचननिर्बन्धेन प्रतिकूलवचनेन च प्रकोपो जनितस्तेन औदास्यमुपलक्ष्य काचित्प्रतिष्ठिता स्त्री तं नायकं प्रबोधयन्ती वदति—अत्थक्केति। पुत्रक! रोषणादिः स्नेहस्य पदवी पन्थाः। उन्मूर्च्छनसन्तापः। उन्मूर्च्छनं प्रतिकूलवाचा प्रकोपनमिव (इति) प्राचीनटीका। स्त्रीणां स्नेहगत्या चायमेव धर्म इति धर्मः। जिगीपुणाऽलीकवचनादिना प स्नेहोऽर्जनीय इति नीतिः। रोषादीन् स्नेहस्य पदवीं दृष्ट्वा योगिना संसारे उदास्तव्यमिति युक्तिः। कण्ठाभरणे स्त्रीपुंसयोः सङ्गतयोर्मानोऽयम्। अत्र प्रेमगतेः स्वभावकौटिल्याद्धेतुमन्तरेणोपजायमानो निर्हेतुरुच्यते इति ॥ ६७९ ॥

पिअइ कण्णंजलिहिँ जणरवमिलिअं वि तुज्झ संलावं।
दुद्धं जलसंमिलिअं सा बाला राअहंसि व्व ॥ ६८० ॥

पिबति कर्णा[3]ञ्जलिभिर्जनरवमिलितमपि तव संला[4]पम्।
दुग्धं जलसम्मिलितं सा बाला राजहंसीव ॥

त्वदेकचित्ता त्वय्यनुरक्ता इति कापि सख्या अनुरञ्जनं तत्कान्ते कथयति—पिअइ इति। सा बाला तव कान्तस्य संलापं समीचीनमालापं श्रवणं श्रोत्रमञ्जलिरिव तैः पिबति शृणोति। जनानां रवस्तेन मिलितमालापम्, यथा राजहंसी जलेन सम्मि-

१. अकस्माद्रोषणम् for आकस्मिकरोपकरणम् P.
२. उन्मूर्च्छन० for उन्मत्सर० P.
३. श्रवणा० for कर्णा० P.
४. सन्वा० for संला० P.

लितं दुग्धं पिबति तथेत्यर्थः । धार्मिकैः समीचीन आलापो वेदादेः श्रोतव्य इति धर्मः । नीतिमता सर्वविध आलापः श्रोतव्य इति नीतिः । यथा राजहंसी विविच्य दुग्धं पिबति तथा योगिना विविच्य सदुपदेशः श्रोतव्य इति युक्तिः ॥ ६८० ॥

अइ उज्जुए ण लज्जसि पुच्छिज्जंती पिअस्स चरिआइं ।
सव्वंगसुरहिणो मरुवअस्स किं कुसुमरिद्धीहि ॥ ६८१ ॥

अयि[1] ऋजुके ! न लज्जसे पृच्छन्ती[2] प्रियस्य चरितानि ।
सर्वाङ्गसुरभेर्मरुवकस्य[3] किं कुसुमर्द्धिभिः[4] ॥

कापि प्रियस्य पृष्टा सती कान्ते समादरं कुर्वाणा पत्यावनुरागातिशयं कथयति—अइ इति । सर्वैरङ्गैः सुरभिणो मरुवकस्य कुसुमानां समृद्धया उपचयेन किम् अपि तु न किमपीत्यर्थः । अन्येषां कुसुमद्वारकं सौरभमुपलभ्यते । मरुवकस्तु स्वत एव सुरभिः । तथा च तस्य कान्तस्य चरितं स्वत एव प्रकाशं नान्यद्वारेत्यर्थः । तथा च धर्मं कर्माचरणीयं यथा प्रसिद्धिरुपजायत इति धर्मः । अत्यार्जवं कुटिले न विधेयमिति नीतिः । योगिनां कुसुमादेर्विषयस्य समृद्धिरप्रयोजिकेति युक्तिः ॥ ६८१ ॥

मुद्धे अपत्तिअंती पवालअंकुरअणिद्धलोहिअए ।
णिद्धोअधाउराए कीस सहत्थे पुणो धुअसि ? ॥६८२ ॥

मुग्धेऽप्रत्ययन्ती[5] प्रवालाङ्कुरस्निग्धलोहितौ[6] ।
निर्धौतधातुरागौ किमिति स्वहस्तौ पुनर्धावयसि ? ॥

नायिकां काञ्चिदुत्तमां सुकुमाराङ्गीं सुकुमारौ हस्तौ लोहितेन रागेणाक्तौ धारयन्तीं दृष्ट्वा कश्चिदुत्तमो नायकोऽतिसाभिलाषो वदति—मुद्धे इति । अप्रतियती प्रत्ययमगच्छन्ती अत एव मुग्धे अहो हे ! प्रवालाङ्कुरस्य यो वर्णः स इव निर्धौतः यो वर्णास्तेन शोभितौ हस्तौ । क्षालितो धातोर्गैरिकादे रागो ययोस्तौ । धावयसि क्षालयसि । लौहित्यमेव भ्रमबीजम् । विहितेतरं हस्तादेः क्षालनं न विधेयमिति धर्मः । नयज्ञो विशिष्य भ्रमो वारणीय इति नीतिः । संसारे तस्मिन्नेव तद्बुद्धिरुपजायते अतः स च हातव्य इति युक्तिः ॥ ६८२ ॥

उअ सिघत्तपव्वअसच्छहाइ धुभतूलपुंजसरिसाइं ।
सोहंति सुअणु ! मुक्कोअआइ सरए सिअब्भाइं ॥ ६८३ ॥

१. अति॰ for अयि P.
२. P. adds मम after पृच्छन्ती.
३. ॰सुरभिणो for ॰सुरभे॰ P.
४. कुसुमसमृद्धया for कुसुमर्द्धिभिः P.
५. अप्रतियती for अप्रत्ययन्ती P.
६. ॰वर्णशोभितौ for ॰स्निग्धलोहितौ P

पश्य सैन्धवपर्वतस्वच्छकानि[1] धुततूलपुञ्जसदृशानि ।
शोभन्ते[2] सुतनु[2] ! मुक्तोदकानि शरदि[3] सिताभ्राणि ॥

कस्मिन्नपि सङ्केतस्थाने सुरतासक्ता काचिद्दीर्घरमणार्थं प्रियस्यान्यचित्ततां कुर्वती वदति—उअ इति । वसुआशब्दः शुष्के वर्तते देश्याम् । अभ्रं मेघः । अयं च समयधर्मो यदेको मेघो नीलो जायते सितश्चेति धर्मः । शरदि जिगीषुणा प्रयाणादि विधेयमिति नीतिः । एकमेव वस्तु नानाविधं संसारे दृष्ट्वा उदास्तव्यमिति युक्तिः ॥६८३॥

आउच्छंति सिरेहि विवलिएहि उअ खडिएहि णिज्जंता ।
णिप्पच्छिमवलिअपलोइएहि महिसा कुडंगाइ ॥ ६८४ ॥

आपृच्छन्ति[4] शिरोभिर्विवलितैः[5] पश्य खड्गिकैर्नीयमानाः[6] ।
निःपश्चिमवलितप्रलोकितैर्महिषाः[7] कुडंगानि ॥

पूर्वोक्त एवाभासः । आउच्छंतीति । महिषाः कुडंगानि निकुञ्जान् आपृच्छन्तीव संवदन्तीव । पश्येत्यन्वयः । शिरोभिर्लक्षिता महिषाः । वलितैर्नेत्रैः शिरोभिः । खटकैः, खटका धनुर्भेदास्तदाकाराभिर्गतिभिर्नीयमानाः प्राप्यमाणा महिषाः । तिर्यगवलोकने खटकाकाराभिरवगतिभिर्वहति । खटका छटका इति प्रसिद्धिः । भिन्नास्यमेतत् । सुहृदां परम्परासंवाद एव धर्म इति धर्मः । रतिरेव सर्वत्र विधेयेति नीतिः । गुरुभिर्योगोपदेशाय शिष्या निभृतस्थानं नीयन्त इति युक्तिः ॥ ६८४ ॥

पुससु मुहं ता पुत्ति ! अ वाहोअरणं विसेसरमणिज्जं ।
मा एअं चिअ मुहमंडणं त्ति सो काहिइ पुणो वि ॥ ६८५॥

प्रोञ्छस्व[8] मुखं तत्पुत्रि ! च[9] बाष्पोपकरणं[10] विशेषरमणीयम्[11] ।
मा एवमेव मुखमण्डनमिति[12] सा करिष्यसि[13] पुनरपि ॥

काञ्चिन्नायिकां सुन्दरीं रुदतीं कोऽपि नायकः साभिलाषो वदति—पुसमु इति ।

१. ०सदृशानि for ०स्वच्छकानि P.
२. शुष्यन्तीव for शोभन्ते सुतनु P.
३. P. adds ति before शरदि.
४. ०न्तीव for ०न्ति P.
५. वि is missing in P.
६. खटकैः for खड्गिकैः P.
७. ०वि० for ०प० P.
८. प्रोञ्छय for प्रोञ्छस्व P.
९. तावत्सुन्दरि for तत्पुत्रि च P.
१०. बाष्पौघवलन० for बाष्पोपकरणम् P.
११. ०णीय for ०णीयम् P.
१२. मुख is missing in P.
१३. शोकयिष्यसि for सा करिष्यसि P.

बाष्पौघस्य वलनेन सम्बन्धेन विशेषामुद्गतीयं मुखम्। एवमेव बाष्पौघादेव मण्डनमिति कृत्वा पुनरपि मा शोकयिष्यसि शोकं जनयिष्यसि। अर्थादस्मदादीनां द्वादशैते भक्ता नृणामित्यनुसाराद्भुसम्बन्धो न घर्त्तव्य इति धर्मः। शोकस्तु विवेकिना न विधेय इति नीतिः। पुनरपि जन्मान्तरेऽपि यथा शोको नोत्पद्यते तथा विधेयमिति युक्तिः ॥६८५॥

मज्झे पअणुअपंकं अवहोवासेसु साणचिक्खिल्लं।

गामस्स सीससीमंतअं व रच्छामुहं जाअं ॥ ६८६ ॥

मध्ये प्रतनुकपङ्कमुभयोः पार्श्वयोः स्यानकर्दमम्।

ग्रामस्य शीर्षसीमन्तकमिव रथ्यामुखं जातम् ॥

सर्वथमोपपविसम्भोगे आकुलितकेशपाशायाः केशविन्यासार्थं शरदि रथ्यामुखं वर्णयन्ती सखीदमाह—मज्झ इति। साम मनागर्थे देशी। रथ्यामुखानां शोभावर्णनेनं शंसासूचको गाथार्थः। सीमन्तकरणेन मुखस्य या शोभा सा स्त्रीणामेव धर्म इति धर्मः। जिगीषुणामीदृशी शरत्प्रशस्तेति नीतिः। यथा रथ्यामुखं तथैव सीमन्त इति विरक्तानां मतिरिति युक्तिः ॥६८६॥

अवरण्हागअजामाउअस्स विउणेइ मोहणुक्कंठं।

वहुआइ घरपलोहरमज्जणपिसुणो वलअसद्दो ॥ ६८७ ॥

अपराह्णागतजामातुर्द्विगुणयति मोहनोत्कण्ठाम्।

वध्वा गृहपलोहरमज्जनपिशुनो वलयशब्दः ॥

कस्याश्चिद्वध्वा नाभिगृहावस्थितायाः स्वामी अपराह्णसमये तदीयस्थानं गतस्तमागतं दृष्ट्वा तद्वध्वा गृहपश्चाद्देशे स्नातुमारब्धं तेन च तस्या वलयशब्दो श्रुतस्तेन च शब्देन तस्याः स्वामिनो द्विगुणा सुरतोत्कण्ठा जातेत्येकाऽपरस्याः कथयति—अवरण्हेति। जामाता स्वामी, मोहनं सुरतं गृहस्य पलोहरं पश्चाद्भागस्तत्र मज्जनं स्नानं मार्जनमङ्गसंस्कारो वा तेन मुखरोऽधिको वलयशब्दः रतोत्कण्ठं द्विगुणयत्यधिकां करोतीत्यन्वयः। प्रत्यासन्ने सम्भोगे मन्मथोऽधिक एव भवतीति। तथा च 'तीव्रः स्मरसन्तापो न तथा दूरे यथासन्ने' इति। पलोहरशब्दो गृहपश्चाद्भागे देश्याम्। चिरेण प्रवासादागते स्वामिनि स्त्रीणामेतमेव धर्म इति धर्मः। बाह्योपचारैरेवानुरागविरागौ लक्षयन्ति निपुणा इति नीतिः। कामिसंसर्गश्च कामहेतुरतः सयोगिना वर्जनीय इति युक्तिः ॥ ६८७ ॥

---

१. ०पङ्कम् for ०पङ्कम् P.

२. ०भयपा० for ०भयोः पा० P.

३. ईषत् for स्यान० P.

मा वचह वीसंभं इमाण बहुचाडुअम्मणिउणाणं ।
णिव्वत्तिअकज्जपरम्मुहाण सुणआण व खलाणं ॥६८८॥

मा व्रजत विस्रम्भमेषा[1] बहुचाटुकर्मनिपुणानाम्[2] ।
निर्वर्तितकार्यपराङ्मुखाणा[3] शुनकानामिव खलानाम्[4] ॥

कमपि खलप्रकृतिमनुरक्ता काचित्तमुद्दिश्योपतप्ता वदति—मा वचहेति । प्रतीत्यार्थम् । विस्रम्भं विश्वास मा व्रजतेत्यन्वय. । चटु चाटु प्रिय वाक्यममरः[5] । तत्र निपुणान् कुशलान् । निर्वर्तिते निर्व्यूढे कार्ये पराङमुखान् । यथा श्वानो निर्व्यूढे कार्ये पराङ्मुखा भवन्ति तथेत्यर्थ । चाटौ पिचिण्डे कुक्षिनिमित्त निपुणान् कुशलान् । चटुश्चाटौ पिचिण्डे चेति मेदिनी[6] । चटुचाटुशब्दौ पर्यायावेव। खलाना विषये विश्वासो धार्मिकेण जिगीषुणा वा न कर्तव्य इति युक्ति ॥ ६८८ ॥

णिप्पण्णसस्सरिद्धी सच्छंदं गाइ पामरो सरए ।
दलिअणवसालितंडुलधवलमिअंकासु राईसु ॥६८९॥

निष्पन्नसस्यऋद्धिः[7] स्वच्छन्द गायति पामर शरदि ।
दलितनवशालितण्डुलधवलमृगाङ्कासु रात्रिषु ॥

कामपि विरहिणीं वर्षासमयेऽनागतपतिका समाश्वासयन्ती काचित् सखी वदति—णिप्पण्णेति । यत पामरोऽपि कृतकार्य शरदि स्वच्छन्दो वृत्तस्ततस्तवापि पतिः कृतकार्ये आगतप्राय इति सुस्था भवेत्यर्थ । अपररात्रे सामादिवेदगान कर्तव्यमिति धर्म. । शरदमासाद्य नीतिमताऽऽनन्द एव विधीयते, किं स्वल्पलाभेनापि नीचाना गर्वो भवतीति नीतिः । कदापि वैराग्य कदापि हर्षं दृष्ट्वा ससारे उदास्तव्यमिति युक्तिः ॥ ६८६ ॥

अहिलिज्जइ पंकअलेहलालिवलएण कलमगोवीए ।
केआरसोअरुंभणतसट्ठिअकोमलो चलणो ॥ ६९० ॥

१. इमान् for एषाम् P
२ ०कस्य निपुणान् for ०कर्मनिपुणानाम् P
३. ०खान् for ०खाणाम् P.
४. शुन इव खलानिमान् for शुनकानामिव खलानाम् P.
५ Cf अस्त्री चाटु चटु श्लाघा प्रेम्णा मिथ्याविकत्थनम् I 6. 17
६ P 45 V. 14 Medini reads अथ for च
७ समृद्धि. for ऋद्धिः P

अभिलप्यते पङ्कजलोलुपालिवलयेन कलमगोप्याः ।

केदारस्रोतोवरोधतिर्यक्स्थितः कोमलश्चरणाः ॥

कस्याश्चित्कलमगोप्याश्चरणौ सुकुमारौ लोहितौ दृष्ट्वा कमलभ्रमेण भ्रमरैरभिलप्येते इति काऽप्यपरस्याः कथयति—अहिलिज्जइ इति । पङ्कजलुब्धेनालीनां वलयेन समूहेन कलमगोप्याश्चरणोऽभिलप्यत इति सम्बन्धः । केदारे कियारा इति ख्याते क्षेत्रभेदे यः स्रोतःप्रवाहस्तस्यावरोधे प्रतिबन्धे तिर्यग्भूत्वा स्थितश्चरणः । अत एव कमलभ्रमोऽप्युपपन्नो भवतीति । गुरूणां चरणाः सेवार्थमाकाङ्क्षणीय इति धर्मः । लुब्धेन राज्यादेः परचरणासेवयापि तदुपार्जनीयमिति नीतिः । कमलचरणयोरेवं भ्रमेऽपगते भ्रममूलकः संसारः परिहर्तव्य इति युक्तिः । 'केदारस्तीर्थभेदे स्याद् व्रीह्यादिप्रभवेऽपि च' इति मेदिनी ॥ ६६० ॥

दिअहे-दिअहे सूसइ संकेअभंगवड्ढिआसंका ।

आवंडुरोणअमुही कलमेण समं कलमगोवी ॥६९१॥

दिवसे दिवसे शुष्यति सङ्केतकभङ्गवर्धिताशङ्का ।

आपाण्डुरावनतमुखी कलमेन समं कलमगोपी ॥

कस्याश्चित्कलमगोप्याः शालिक्षेत्र सङ्केतस्थानमासीत्, कलमस्य च पाकेन सा दुर्बलायमाना कयाऽपि दृष्टा साऽपरस्याः कथयति—दिअहे इति । कलमगोपी दिवसे दिवसे शुष्यत इत्यन्वयः । सङ्केतकं सङ्केतस्थानं तस्य भङ्गेन वर्द्धिताऽधिकायमानाऽऽशङ्का यस्याः सा कलमगोपी । आपाण्डुश्चावनतमुखं यस्याः सा । कलमेन समं, यथा कलमो दिवसे दिवसे शुष्यति आपाण्डुरावनतमुखश्च भवति तथेत्यर्थः । समोपमेयम् । उपवासादिभिर्वा दिवसे दिवसे शुष्यत एवेति धर्मः । नीतिमताऽनतिः कर्तव्येति नीतिः । योगेन देहदानं विधाय मुक्तिर्विधेयेति युक्तिः ॥ ६९१ ॥

णवकम्मिएण उअ पामरेण दट्ठूण पाउहारीओ ।

मोत्तव्वजोत्तअपग्गहम्मि अवहासिणी मुक्का ॥ ६९२ ॥

---

१. ०लुब्धा० for ०लोलुपा० P.

२. कलमेन गोप्याः for कलमगोप्याः P.

३. ०वरोधे for ०वरोध० P.

४. Cf. Medini:'केदारोऽद्रौ शिवे क्षेत्रे भूमिभेदालवालयोः।' P. 180. V. 143.

५. शुष्यते for शुष्यति P.

नवकर्मिणा पश्य पामरेण दृष्ट्वा भक्तहारिकाम् ।
मोक्तव्ययोक्त्रप्रग्रहे अवहासिनी मुक्ता ॥

काचित्सुरतासक्ता दीर्घरमणार्थं पत्युरन्यचित्ततां करोति—णवेति । पाउहारी भक्तहारीति देश्यां प्रसिद्धा । नवेन कर्मिणा पामरेण भक्तहारिकां दृष्ट्वा योक्त्ररूपे प्रग्रहे अवहासिनी मुक्ता । भक्तहारिकां दृष्ट्वा जातव्यासङ्गेनावहासिन्येव मुक्ता न पुनर् योक्त्र-प्रग्रहो मोचितः । अवहासिनी नस्यायां नाथ इति प्रसिद्धायां देशी । योक्त्रं योत इति ख्यातम् । कर्मिणा धार्मिकेण भक्तस्य सेवकस्य हारिकां भक्तिं दृष्ट्वाऽवहासिनी मुक्तेति धार्मिकाणां धर्मः । कर्मिणा नीतिमतावहासः केषामपि न कर्तव्य इति नीतिः । ईदृशी-मन्यचित्ततां संसारे विमृश्य योगिना च तत्रोदास्तव्यमिति युक्तिः ॥ ६९२॥

दट्ठूण हरिअदीहं गोसे णईजूरए हलिओ ।
असईरहस्समग्गं तुसारधवले तिलच्छेत्ते ॥ ६९३ ॥

दृष्ट्वा हरितदीर्घं प्रातर्नातिखिद्यते[१] हलिकः[२] ।
असतीरहस्यमार्गं तुषारधवले तिलक्षेत्रे ॥

कस्याश्चित्तिलक्षेत्रं सङ्केतस्थानमासीत्, सा च जारेण समं तत्र क्षेत्रे रमिता, क्षेत्रस्वामिना च वृषभदोषः कृतः । स च वृषभाभिन्दति स्मेति कथयति—दट्ठूणेति । हालिको गृहस्थः प्रातः पल्डान् कुप्यति । चरणान्यासेन तुषारापगमात् । हरितं च तद्दीर्घं चेति हरितदीर्घम् । असत्या रहस्यस्य एकान्तस्य मार्गं दृष्ट्वा । देश्यां गोसे प्रातः । क्रुधेर्जूरिति प्राकृतसूत्रम् । कयाचिन्नीहारनिशाभिसारिकयाऽऽरमता लब्धसुरत-सुखं सूचयन् विदग्ध इदमाह वा । असत्या मार्गं दृष्ट्वा धार्मिकः कुप्यत्येवेति धर्मः । सदा कृतापराधेष्वन्यकृतेपि दोषे शङ्का स्यादिति नीतिः । क्षेत्रे शरीरे धवले परिणते सति मुमुक्षुरसतीमार्गे मुध्यतीति युक्तिः ॥ ६९३ ॥

संगल्लिओ व्व णिज्जइ खंडं खंडं कओ व्व पीओ व्व ।
वासागमम्मि मग्गो घरहुत्तसुहेण पहिएण ॥ ६९४ ॥

सङ्केलित इव नीयते[५] खण्ड खण्ड कृत इव पीत इव ।
वर्षागमे मार्गो गृहमविष्यत्सुखेन[६] पथिकेन ॥

---

१. सधायाo for णइo Weber.
२. प्रातःपल्डान् क्रुध्यति for प्रातर्नातिखिद्यते P.
३. हालिकः for हलिकः P.
४ तव for तुषारo P.
५. ज्ञायते for नीयते P.
६. गृहाभिमुखमनसा for गृहभविष्यत्सुखेन P.

कामपि प्रोषितपतिकां वर्षास्वपि नागच्छति पतिरिति विषादं गच्छन्तीं तत्सखी समाश्वासयन्त्याह—संमेलित्रो ण्व इति। गृहाभिमुखं गामि मनो यस्य तेन पथिकेन मार्गो गाथापूर्वार्द्धोक्तकार्यविषयी कृतः। शरदि अवश्यमेवागमिष्यतीति भावः। संमिलितो भद्रः पथिकेन। संन्यासिना वर्षासु न क्वापि गन्तव्यमित्यन्यत्र कीटवत् पर्यटे...तिरि- त्युक्तमतो मार्गो मिलित एव (इति) धर्मः। वर्षासु नीतिमता सञ्चारो न विधेय इति नीतिः। यः कश्चन सांसारिकः पन्थाः स च योगिना मस्त [redacted] त्यत इति युक्तिः॥ ६६४॥

अह सुअइ दिण्णपडिवक्खवेअणा पसिढिलेहिँ अंगेहिँ।

णिव्वत्तिअसुरअरसाणुबंधसुहणिब्भरं वहुआ॥ ६९५॥

अथ स्वपिति दत्तप्रतिपक्षवेदना प्रशिथिलैरङ्गैः।

निर्वर्तितसुरतरसानुबन्धसुखनिर्भरं वधूः॥

कामपि सुरतखेदसुप्तां विलाय एकाऽपरस्याः कथयन्ती निहुतमपि सुरतं प्रकाश- मानाऽनुमानिकं ज्ञानं चलीय इत्याह—अवस्वयइ इति। वधूरवस्वपिति असामस्त्येन शेते। दत्ता प्रतिपक्षे सपत्न्यां वेदना पीडा यया सा वधूः। प्रशिथिलैरङ्गैरुपलक्षिता। निर्वर्तितं निर्वाहितं यत्सुरतं तत्र यो रसस्तस्य शृङ्गारस्यानुबन्धः सम्बन्धस्तेन यत्सुखं तेन निर्भरं यथा स्यादेवम्। अव इत्युपसर्गो निश्चयासाऽत्याबारेषु वर्तन इत्युपसर्गवृत्तिः। अतिनां महाचर्येण प्रशिथिलमङ्गं भवतीति धर्मः। सन्ध्यादिभिरङ्गैः प्रशिथिलैः सद्भिर्जि- गीषूणां सावधानता न भवतीति नीतिः। यमादीनां योगाङ्गानामवधानं विधेयं योगि- नेति युक्तिः। निद्राजनितं सुप्तमिन्द्रियाणां निमीलनं तद्रूपेण रसस्य प्रकर्षोऽयमिति कण्ठाभरणे[3]॥ ६६५॥

चोराण कामुआण अ पामरपहिआण कुक्कुडो रडइ।

रे रमइ वहइ वाहयइ एत्थ तणुआअए रअणी॥६९६॥

चौरान्कामुकांश्च[4] पामरपथिकांश्च[5] कुक्कुटो रटति[6]।

रे रमत[7] वहत वाहयत अत्र[8] तनूयते रजनी॥

1. A few syllables are missing here.

२. अवस्वपति for अथ स्वपिति P.

३. P. 291. SK reads निद्रादिजनितं सुप्तं बाह्येन्द्रियनिमीलनम् for निद्रा- जनितं सुप्तमिन्द्रियाणां निमीलनम् P.

४. पथिकानां कामुकानाम् for चौरा- न्कामुकांश्च P.

५. पामराणां चोराणां for पामरपथिकांश्च

६. कथयति for रटति P.

७. वहत रमत for रमत वहत P.

८. अत्र is missing in P.

कश्चित्कुलवध्वा समं रात्रिं व्याप्य रतासक्तस्तं च तस्य सखा रमण्यं विधाय त्वरया स्वस्थानं गम्यतामित्यन्यापदेशेन बोधयति—पहिआयोति। रजनी तनुकायते अल्पायते। अतः रे सम्बोधने यूयं पथिका वहत पथि गच्छत, कामुका रमत पामरा वाहयत वृषान् अर्थात् चोराः पलायत। कुक्कुटः पथिकादीनामेव कृते कथयति। परेषां विपत्तिं ज्ञात्वा धार्मिकेण सदुपदेशो देय इति धर्मः। आपातसुखहेतौ कर्मणि ज्ञायतां विपदि नीतिज्ञेन तन्नोदास्तव्यमिति नीतिः। सांसारिकं कार्यं कर्मणा परिणामविरसं ज्ञात्वा मुमुक्षुणा परिहरणीयमिति युक्तिः॥ ६९६॥

संझागहिअजलंजलिपडिमासंकंतगोरिमुहकमलं।
अलिअं चिअ फुरिओट्ठं विअलिअमंतं हरं णमह॥ ६९७॥

सन्ध्यागृहीतजलाञ्जलिप्रतिमासङ्क्रान्तगौरीमुखकमलम्।
अलीकमेव[1] स्फुरितौष्ठं[2] विगलितमन्त्रं[3] हरं नमत॥

अलीकरोपोद्गमो देवानामपि भवति किं पुनर्मानुषस्येति प्रणयरोषमसहमानं कमपि युवानं कापि सकलकामकलाभिज्ञा प्रतिष्ठिता बहुतरानुनयनप्रकारं तं बोधयन्त्याह। ग्रन्थान्ते नमस्कारगाथां वा प्राह—संझेति। हरेणैव प्रकरणात्सन्ध्योपासनार्थं गृहीतो यो जलाञ्जलिस्तत्र प्रतिमया सङ्क्रान्तं गौरीमुखकमलं यस्मात्तं हरम्। अनर्थकं वृथैव यथा स्यादेवं स्फुरित ओष्ठो यस्य तं हरं नमतेति सम्बन्धः। पसुवइणो इत्याद्यगाथाया-मेवार्थत्रयमपरमुक्तं वेदितव्यम्॥ ६९७॥

जुज्झचवेडामोडिअजज्जरकण्णस्स जुण्णमल्लस्स।
कच्छाबंधो च्चिअ भीरुमल्लहिअअं समुक्खणइ॥ ६९८॥

युद्धचपेटामोटितजर्जरकर्णस्य जीर्णमल्लस्य[4]।
कक्षाबन्ध एव भीरुमल्लहृदयं[5] समुत्खनति[6]॥

कस्यचित् प्रतिष्ठितमल्लस्य वधूस्तदीयवधूपक्रमे सन्तप्ता उत्तानं चरणमवतंसयन्ती कामपि वदति—जुज्झेति। युद्धे चपेटेन मोटितो जर्जरः कर्णो यस्य तस्य जीर्णमल्लस्य कक्षाबन्ध एव भीरुमल्लानां हृदयानि उत्खनति। 'कच्छाबंधो' कक्षाबन्धः। स एव भीरूणां मल्लानां हृदयानि उत्खनति उन्मूलयति, पूर्वावस्थातोऽवस्थान्तरं भीतिसहितं

---

१. व्यलीक॰ for अलीक॰ P.
२. स्फुरितोष्ठं for स्फुरितौष्ठम् P.
३. ॰मन्युम् for ॰मन्त्रम् P.
४. जीर्ण is missing in P.
५. ॰मल्लहृदयानि for ॰मल्लहृदयम् P.
६. खनति for समुत्खनति P.

जनयति। तथा च पश्य मल्लं सकृद्बद्धबन्धमेव दृष्ट्वाऽन्ये मल्ला बिभ्यति किं पुनर्युद्धादिभिरित्यभिसन्धिः। एष एव धर्मो यत्पौरुषमन्तराप्यभिमतसिद्धिरिति धर्मः। तथा च नीतिमता व्यवहर्तव्यं यथा शत्रवो बिभ्यतीति नीतिः। एकस्य मल्लस्यावस्थाभेदमाकलय्य योगिना संसारे उदास्तव्यमिति युक्तिः ॥ ६९८ ॥

सच्चं साहसु देअर ! तह-तह चडुआरएण सुणएण।

णिव्वत्तिअकज्जपरम्मुहत्तणं सिक्खिअं कत्तो ॥ ६९९ ॥

सत्यं कथय देवर ! तथा तथा[1] चाटुकारकेण शुनकेन[2]।

निर्वर्तितकार्यपराङ्मुखत्वं शिक्षितं कस्मात्[3] ॥

कश्चिदशिष्टभ्रातृजायायामनुरक्तः प्रथमं कार्यसिद्धिपर्यन्तं तद्विषये सम्मुख आसीत्। सिद्धे च कार्ये पराङ्मुखो वृत्त इति तमुद्दिश्य भ्रातृजायायै वदति। किं वा पुनः सुरतविमुखं देवरमनुकूलयन्ती काप्यन्यापदेशेनाह—सच्चमिति। यस्तु प्रथममेवं प्रियं करोति स कथमप्रियमाचरतीति भावः। अनुरक्तचित्ताः स्वहानिमाकलयन्तोऽपि पराङ्मुखत्वेऽप्यर्थयन्त इति धर्मः। किं वा विदग्धा अस्थिरस्नेहं व्याजाद्रुपहसन्त्येवेति नीतिः। एकत्रैव सम्मुखत्वं पराङ्मुखत्वं विज्ञाय योगिनोदास्तव्यमिति युक्तिः ॥६९९॥

मा मा मुञ्च परिहासं देअर ! अणहोरणा वराई सा।

सीयम्मि वि पासिज्जइ पुणो वि एसिं कुणसु छायं ॥७००॥

मा मा मुञ्च परिहासं देवर ! अप्रावरणा वराकी सा[4]।

शीतेऽपि प्रस्विद्यति पुनरपि अस्याः कुरु छायाम्[5] ॥

युवयोरन्योन्यरागो मया लक्षित इति प्रतिपादयन्ती कापि देवरमाह—मा मा इति। मा मा सम्भ्रमप्रतिषेधे। परिहासं मुञ्च त्यज। त्वत्सम्बन्धिनीयं वराकी अप्रावरणा अनाच्छादना तस्मात्स्वदेहेनैवास्या आच्छादनं कुर्विति भावः। नायिकाया अनुरागं व्यञ्जयन्ती प्राह—शीतेति। त्वदङ्गच्छायाभावादिति भावः। प्रस्वेदस्तु सात्त्विक एव नायकच्छायासम्बन्धादेव। प्रणयिनः शीतादिक्लेशं न गणयन्तीति धर्मः। शीतार्तानां परिहासेनाप्युपद्रवो न विधेय इति नीतिः। निरावरणा एव योगिनः परिहासशून्या भवन्तीति युक्तिः ॥ ७०० ॥

---

१. तत्तथा for तथा तथा P.
२. शुनकेन for शुनकेन P.
३. कुतः for कस्मात् P.
४. ते for सा P.
५. कुरु छायां तस्याः for अस्याः कुरु छायाम् P.

विरचयति सप्तशतेषु गाथानां शतं यच्छ्रुत्वा कवयः ।
उन्नतभ्रूलताधूनितशीर्षं यथा स्यादेवं चमत्कुर्वन्ति[1] ॥

सप्तशतान्ते गाथामाह—विरअइ इति । सप्तशतेषु मध्ये गाथानां शतं विरचयति, विरचितवान् कृतवान् अर्थात् शालवाहनः । यद्गाथानां शतं श्रुत्वा कवयश्चमत्कुर्वन्ति । उन्नता भ्रूलता यत्र तादृशं धूनितं कम्पितं शीर्षं यथा स्यादेवं चमत्कारयन्ति चमत्कारं जनयन्ति । 'वर्तमानसामीप्ये वर्त्तमानवद्वा' इति भूते ॥

इति हारितान्वश्रीपीताम्बरकृतायां सप्तशत्याष्टीकायां सप्तमं शतम् ॥
समाप्तोऽयं ग्रन्थः ॥



१. This verse is peculiar to Pitāmbara and is not found anywhere else.

